॥ श्री ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमते श्रीनिगमान्तमहादेशिकाय नमः ॥

श्रीमद्वेदान्तदेशिककृतं

# ॥ श्रीपादुकासहस्रम् ॥

श्री[illegible] परिशोधितम्

तत्कृतेन पादुकाविजयाख्यसंस्कृतोपोद्घातेन सहितम् ॥

मान्ये मखोन्नते मासे पूर्णिमायां प्लवोत्सवे ।
श्रीगोष्ठीनाथपादाब्जे पादुकेयं समर्पिता ॥

देवकोट्टै राजाजी मुद्रालये मुद्रितम्

प्रकाशकः

तिरु पार्थसारथिः अड्वकेट् देवकोट्टै

मूल्यम्] १९५१ [२-८-०

॥ श्रीः ॥

# ॥ विज्ञापना ॥

विदितमेवैतादार्याणां यत् कवितार्किकसार्वभौमैः श्रीमद्वेदान्तदेशिकैः श्रीरङ्गनाथदिव्याज्ञया एकयामे पादुकासहस्राभिधं पद्यसहस्रं प्रणीतमिति । तादृशदिव्यवैभवयुक्त ग्रन्थः समीचीनतया परिष्कृत्य मुद्रणीय इति महनीयानां श्री जगन्नाथ अय्यङ्गार् स्वामिन प्रेरणांचानुसृत्य इदानीं मुद्रित श्रीगोष्ठीनाथदिव्यपादाब्जे सप्रणामं समर्प्यते ।

इत परं अत्युत्कृष्टतया [illegible]रप्यादृता परीक्षाख्या व्याख्या श्रीश्रीनिवाससूरिविरचितापि मूलपरिष्कर्तृभिः "सुप्रीम् कोर्ट् सीनियर् अड्वकेट्" पदमधितिष्ठद्भिः पण्डितप्रकाण्डैः श्रीमद्भिः केशवाचार्यैः परिष्कृत्य अनुपदमेव प्रकाश्यतेति विश्वसिम ।

एतैरेव महनीयैः कृतः अर्थतः शब्दतः चित्रबन्धेष्वपि मूलादनपेतः द्रमिडभाषात्मक तिरुप्पादुकमालै (திருப்பாதுகமாலை) नामकः ग्रन्थः इत पूर्वमेव मुद्रितो वरीवर्तीति सन्तो जानन्त्येव ।

एभिरेव महाशयैः श्रीमन्निगमान्तमहादेशिकहृद्यतम गाथाचतुस्सहस्रीति प्रख्यात நாலாயிர திவ்யப்ரபந்த ग्रन्थोपि सम्यक् विशोध्य प्रकाश्यते इति सादरमावेदयितुं उत्सुका स्म ।

एतादृशातिश्लाघ्यतमकैङ्कर्यमनुतिष्ठतामेषां महतां रमादयितः श्रीरङ्गभूरमणः दीर्घायुष्यादिकं वितीर्य एतादृशरीत्या समीचीनग्रन्थप्रकाशनेन अस्माननुगृह्णातु इति अभ्यर्थयामहे ।

एतद्ग्रन्थप्रकाशने निस्सीमश्रद्धया भूरिधनमुपकृतवतां अड्वकेट् श्री. उ. वे. आर् गोपालस्वामि अय्यंगार् महाशयानां च कृते कृतज्ञताप्रकाशनादन्यत् कर्तुं न पारयामः ।

इति

प्रकाशकः

श्री

# CONTENTS

॥ श्रीः ॥



श्रीरङ्गनाथस्सपादुकः

शुभसरणिरजोभिश्शोभयन्ती धरित्रीं परिणतिरमणीयान प्रक्षरन्ती पमर्थान् ।

श्रीः

श्रीमते रामानुजाय नमः ।

# ॥ श्रीपादुकाविजयः ॥



शिञ्जितैर्व्यञ्जयन्ती तामनालेख्यसरस्वतीम् ।
अलेखनीयसौन्दर्या भाति देशिकभारती ॥ १

शुभयोभयवेदान्तकलयोज्ज्वलया यया ।
तद्विष्णोः परमं भाति पदं सा भाति पादुका ॥ २

काव्यश्रीरेधतामेषा लोकोत्तरगुणोत्तरा ।
नायिका भाति यत्र श्रीरङ्गनायकपादुका ॥ ३

अशेषजगदाधारशेषिणः पदपद्मयोः ।
अनन्या पादुकालक्ष्मीः उदयत्यमृतोदया ॥ ४

श्रीरङ्गनाथकल्याणपादुकाभ्यां नमो नमः ।
ययोः कल्याणसञ्चारकविर्वेदान्तदेशिकः ॥ ५

यत्सहस्रपदब्रह्म परब्रह्मपदक्रमम् ।
स जयत्यखिलानन्दपदसत्यपराक्रमः ॥ ६

ईश्वरो विश्वनिर्माता विश्वमाता दयापर. ।
ययैव परमो भाति भाति सा पादुका परा ॥ ७

अष्टाधिकसहस्रश्रीपद्यसद्विद्यया परा ।
द्वात्रिंशत्पद्धतिप्रख्या समिन्धे हरिपादुका ॥ ८

यदुपज्ञमभूत् श्रीमत्शठजित्संज्ञितं पदम् ।
प्रथता स परब्रह्मपदत्रश्रीकविः पर. ॥ ९

जगदुत्तारकस्वाङ्घ्रेः याम्वातीतरत्प्रभुः ।
सा समुत्तारभूरङ्घ्रिरक्षाश्रीरस्मृता सताम् ॥ १०

सामनिस्सीमवाग्धामसाहस्रभूः
नामपादागमा रामपादावनी ।
हेमनामापगारामजामातृना-
कामसञ्चारतः कामचारायते ॥ ११

यदनुजनुरुदारा यत्पथस्वैरचारा:
यदधिगतिविहारा यत्सवर्णप्रकारा: ।
महितकविवरा यन्निर्मलब्रह्मनादा:
जयति निगमलक्ष्मीनाथपादावनी सा ॥ १२

छन्दश्शिरोगुरुरवीवृधदङ्घ्रिलक्ष्मीं
लक्ष्मीपतेरखिलहेयविपक्षलक्ष्म्या ।
आलक्ष्यसर्वजगदेकदयोत्तरङ्ग-
श्रीरङ्गनाथमणिपादुकया कयापि ॥ १३

पद्ये वेदशिरोगुरो. रघुपते. पादे दरीदृश्यते
सर्वीयस्वशरण्यतोज्ज्वलघनज्योतिर्यदध्यक्षतः ।
योगक्षेमवहं समस्तजगता योगात्मकं पावनं
जीयात् तत् शठजित्समाख्यचरणत्राणं त्रयीमङ्गलम् ॥ १४

तत्तादृक्प्रथमावतारपरमश्रीरामपादप्रथा-
भूरिश्रीपरिणाहमङ्गलकलोदारानुभावोत्तरा ।
श्रीरङ्गेशपदान्तरङ्गपरमप्रेमोत्तरङ्गामृत-
श्रीरिन्धे श्रुतिशृङ्गदेशिकसुधासारस्वतश्रीमयी ॥ १५

अद्धाध्वन्यध्वबद्धादरविबुधसुधास्वादनाडिंधमोद्य-
द्विद्याशिल्पावतारश्रुतिशिखरयशश्शेखरोल्लासरासा ।
नृत्यत्यानन्दरङ्गायतचरणकलाभारतीनृत्तरङ्गे
श्रीरङ्गेशाङ्घ्रिरक्षादशशतकवितासिंहवाग्ब्रह्मलक्ष्मी. ॥ १६

—*—

# कविकाव्यमहत्त्वसूचनम्

सत्पथनिष्ठानां सदसद्विवेकचतुराणां निर्मलानन्दनिगमान्त-सारस्वतास्वादरसिकाना सहृदयाना चित्तरञ्जकतमं सत्काव्योपमानतया महनीयैः अभ्यर्हितं भगवत्पादुकाराधनरूपम् अष्टाधिकसहस्रपद्यात्मकं द्वात्रिंशत्पद्धत्यात्मकं च मन्त्रविद्योज्ज्वलं **पादुकासहस्रसमाख्यं** प्रशमितसमस्तचित्तान्तरायशान्तरसपुष्कलं काव्यरत्नमिदं विजयते.

तगम् । सर्वशरीरिणः सर्वमन्त्रमनोहरस्य सर्वलोकशरण्यस्य परब्रह्मणः श्रीरङ्गनाथस्य पादुकामधिकृत्य वेदान्तदेशिकः - कवितार्किकसिंहः सर्वतन्त्रस्वतन्त्रः श्रीमान्वेङ्कटनायकः सर्वश्रुतिमनोहरं निगमान्तसार-सर्वस्वं प्रबन्धमिमं निरमिमीत ।

"सूचयन्ती स्वरेखाभिः अनालेख्यसरस्वतीम् ।
अलेखनीयसौन्दर्यामाश्रये शौरिपादुकाम् ॥"
(पादुकासहस्रे॥ ८-११ ॥)

इत्येतत्प्रबन्धरेखापद्धत्युपक्रमश्लोकः प्रणेतुरस्य वेदान्तदेशिकत्वं कवितार्किकसिंहत्वं च स्वरसतः सूचयति । काव्यविषयभूतपादुकाया इव कविकर्मभूतकाव्यस्यास्यापि स्वरेखाभिः अनालेख्यसरस्वतीसूचकत्वं अलेखनीयसौन्दर्यत्वं च सहृदयहृदयं सरसमावर्जयति । अनालेख्यत्वात् वेदसम्मितत्वम् अलेखनीयसौन्दर्यत्वात् आनन्दमयत्वं रसघनत्वं विश्वहृदयवशीकारित्वं महाकाव्यत्वं च चारु सोसूच्यत इति विषयस्य प्रबन्धस्य च विजयसूचनम् । तदत्र किञ्चित्प्रपञ्च्यते ।

---

## काव्यतत्त्वम्

कविकर्म काव्यम् । कविशब्दः क्रान्तदर्शिनि निबन्धरि च प्रसिद्धः । इमां च प्रसिद्धिं स्तोत्ररत्नभाष्ये भगवद्गीताभाष्यतात्पर्य-चन्द्रिकायाम् अन्यत्र च कविरयं स्वयमेवाचष्टे । "कवयः क्रान्तदर्शिनः

इति प्रसिद्ध्या अर्थान्तरप्रसिद्धे अत्र अनुपयोगाच्च इति 'कवयोऽप्यत्र मोहिता.' (गीता- ४-१६) इति गीताभाष्यतात्पर्यचन्द्रिकाया कविशब्दस्य उभयत्र प्रसिद्धि कविना प्रादर्शि। 'कवीनामुशना कवि:' (गीता- १० ३८) इति गीताभाष्यतात्पर्यचन्द्रिकाया "कवीनामिति न निबन्धृत्वं विवक्षितं, तथा सति वाल्मीकिप्रभृते: सर्वातिशायित्वात्, अत. क्रान्तदर्शी कवि. इति विवक्षित: इत्यभिप्रायेणाह" इति कविना निरूपितम् । एकस्मिन्नर्थे अन्यस्मिन्वा तत्र तत्र कविशब्दप्रयोग प्रयोक्तृविवक्षायत्त इत्यवगन्तव्य: । क्रान्तदर्शित्व योग निरन्तरूढ, रूढि. योगमपहरतीतिन्यायात् कविशब्दस्य क्रान्तदर्शित्वनिरपेक्षकेवलनिबन्धृत्व एव प्रसिद्धि: इति केषाचित्पक्ष: प्रसिद्धिपराहतत्वान्निरस्त एव, उक्तन्यायावतारस्य सर्वथाप्यनवकाशात् । न च उभयोरप्यर्थयो. मिथो विरोधगन्धशङ्कावकाश. । प्रत्युत तयो: स्वरसत: समन्विततया प्रसिद्धत्वात् । अतो विवक्षाधीनमुख्यैकार्थत्वमेव तत्र तत्र द्रष्टव्यम् । कविशब्द. परमात्मनि तदनुग्रहसमुन्मीलितदिव्यनयनेषु तदनुग्रहसमुदञ्चितदिव्यवाङ्मयेषु च वर्तते । 'कवि कवीना' इति परमात्मानं देवी श्रुतिरुज्जिगाति । सोऽयं परमात्मा स्वयमेवोद्गृणाति 'कवि पुराणम्' इति (गीता-८-९) । 'कवि सर्वज्ञम्' इत्यत्र रामानुजभाष्यम् । 'कवि क्रान्तदर्शिनं, सर्वज्ञम्' इति शङ्करभाष्यम् । 'कवि सर्वज्ञं, य सर्वज्ञ: इतिश्रुते:, त्वं कवि: सर्ववेदनात् इति च ब्राह्मे' इति आनन्दतीर्थभाष्यम् । भगवन्नामसहस्रे 'कवि:' इति नाम 'वेदवित्' इति नाम्न. परम् अव्यवधानेन आम्नातम् । अत्र भट्टपराशरेण भगवद्गुणदर्पणे 'स एव (वेदविदेव) क्रान्तदर्शित्वात् कवि.

कुङ् शब्दे ' दर्शनकर्मणोऽस्मात् उन्' इति भाषितम् । भगवान् वेदवित्, कविः, इति परमहृदयम् । 'यदक्षरं वेदविदः' इति गीतायां (८ ११) 'पुनरपि वक्ष्यमाणेन उपायेन प्रतिपित्सितस्य ब्रह्मणः वेदविद्वदनादि-विशेषणविशेष्यस्य अभिधानं करोति भगवान्' इति शङ्करभाष्यम् । भगवतीव तत्साधर्म्यसंपन्नेषु धीरेषु क्रान्तदर्शिषु कविशब्दः प्रसिद्धः । 'तं धीरासः कवय उन्नयन्ति' इति भगवन्निश्वासभूतं वेदशास्त्रं, 'कवयोऽप्यत्र मोहिताः', 'कवीनामुशना कविः' इति शास्त्रयोनिः भगवान् स्वयमेव च धीरान् क्रान्तदर्शिनः कवय इति सादरमभिधत्ते। 'कविर्वाल्मीकिशुक्रयोः' इति नैघण्टुकाः । उक्ततात्पर्यचन्द्रिकाप्रक्रियया निबन्धृत्वप्राधान्यं प्राचेतसे क्रान्तदर्शित्वप्राधान्यमुशनसीति बोद्धव्यम् । निबन्धृत्वमुख्यकवितामवतारयितुं वेदोपबृंहणकुतूहलिनः परमोदारस्य आदिकवेः वाल्मीकेः दिव्यकर्म कार्त्स्न्येन काव्यं, तदेव च काव्यं रामायणसंज्ञितम् । तस्यैव दिव्यकर्मणः संज्ञाया णत्वमनुशासनात् सिद्ध्यति । 'पूर्वपदात्संज्ञायामगः' इति येन पाणिनिसूत्रेण (८-४-३) सर्ववाच्यप्रकृतिभूतस्य परब्रह्मणः संज्ञामूलकणत्वघटितनारायण-शब्दाभिधेयत्वमनन्यथासिद्धतया स्वतःसिद्ध्यति, तेनैव सूत्रेण सर्व-काव्यप्रकृतिभूतस्य शब्दब्रह्मणः संज्ञामूलकणत्वघटितरामायणशब्दा-भिधेयत्वमनन्यथासिद्धतया स्वतः सिद्ध्यति। एकत्र वाच्यस्यैव अन्यत्र वाचकस्येति उभयत्रापि संज्ञात्वं तुल्यम् । अतो हि 'रामायणकवि' इति भवभूतिः, "तावकगुणग्रामाय रामायणम्" इत्याचार्यः पादुकासहस्र-कविः । 'कृत्स्नं रामायणं काव्यम्,' 'पुण्यं वेदैश्च सम्मितम्' इति वाल्मीकिः स्वयमेवाशास्ते । 'मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती' 'न ते वागनृता काव्ये काचिदत्र भविष्यति', 'तत्सर्वं धर्मवीर्येण

पुराण ' इति श्रुतिगीताद्युद्घोषिते परमात्मन्येव मुख्यवृत्त अन्यत्र तु तद्गुणलेशयोगादौपचारिक इति बोद्धव्य. । 'तद्गुणसारत्वात्तु तद्व्यपदेश प्राज्ञवत्' इति ब्रह्मसूत्रन्यायानुरोधेन तद्गुणसारत्वं परमात्मन्येव तद्गुणलेशत्वमन्यत्रेति कविताख्यप्राज्ञत्वमवधार्यम् । 'ध्रवासो अस्य कीरयो जनास ', 'तं धीरास कवय उन्नयन्ति' 'तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते' इति श्रुतिघोषितकविता-घण्टारव । 'तद्वाग्विसर्गो जनताघविप्लव यस्मिन प्रतिश्लोकमबद्ध-वत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधव: ।। ' इत्यनुशिष्टं शिष्टसार्वभौमेन शुकब्रह्मणा साधु-काव्याख्यवाग्विसर्गव्याकरणम् । एवं खलु प्रसरति शुकमुखात् वाग्वि-सर्गाख्यकवितासरस्वतीनिर्यास । सार्वभौमोऽयं काव्यघण्टापथ. । अयमेव पन्था भरतहृदयाभिज्ञै भामहादिभि·प्राचीनैरालङ्कारिकैरनुवर्तित । 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ' तदनुप्राणनाज्जीवेद्वर्णनानिपुण. कवि. । ' ' उपश्लोक्यस्य माहात्म्यादुज्ज्वला काव्यसंपद. । ' इति भामहेन उपदिष्टम् । ' कवे·अल्पापि वाग्वृत्ति. विद्वत्कर्णावतंसति । नायको यदि वर्ण्येत लोकोत्तरगुणोत्तर ।। ' इति भोजराजेनोक्तम् । भामहभोजादीना शुकवर्त्मानुवर्तित्वं स्पष्टमवगम्यते । यदुक्तं — 'कवनीयं काव्यम्' इति लोचनकारेण, 'कवयतीति कवि तस्य कर्म काव्यम्' इति विद्याधरेण, 'निर्दोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इति विद्यानाथेन, 'लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्' इति मम्मटेन, 'कौति शब्दायते विमृशति रसभावानिति कवि. तस्य कर्म काव्यम् ' इति भट्टगोपालेन, 'काव्यशब्दोऽयं गुणालङ्कारसंस्कृत-यो. शब्दार्थयो: वर्तते ' इति वामनेन, 'वाक्यं रसात्मकं काव्यम् '

इति दर्पणकारेण, 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति पण्डितराजेन, एवमन्यैरन्यथाच लक्षितं सर्वमपि भामहमताविरोधेन नेयम् । अन्यथा अव्याप्त्यतिव्याप्तिव्याहत्यादय प्रसज्येरन् । प्रज्ञाम् अनु यः प्राणिति तस्य सृष्टि काव्यमिति यथोक्तप्रकारेण समञ्जसमतोन्मिषदालङ्कारिकसार्वभौमभामहहृदयपरामर्शरसिकाना निरामयस्समयः । तद्वत् काव्यात्मविषये च यदुक्तं-- काव्यस्यात्मा ध्वनिः इति आनन्दवर्धनेन, रीतिरात्मा काव्यस्येति वामनेन, जीवितं व्यङ्ग्यवैभवमिति विद्यानाथेन, रस इति मम्मटेन, औचित्यमिति क्षेमेन्द्रेण, वक्रोक्तिरिति वक्रोक्तिजीवितकारेण, अन्यथा चान्यैः, तत्सर्वं यथोक्तमेव नेयमिति समन्वयरसिका । रसिकसार्वभौमः बादरायण सर्वेषामपि वेदान्तवाक्याना रसशब्दाभिलप्ये परस्मिन्ब्रह्मणि परमपुरुषार्थतया समन्वयं बोधयन् तद्रसमनुभूय अनुभूय तन्मयता प्रपन्नः तद्रसात्मकं शारीरकशास्त्रं सूत्रयामास । तथैव रसिकसार्वभौमोऽयं वेदान्तदेशिकः भरतमतसारवेदी सारविदुक्तमप्यखिलं यथोपपन्नं समन्वयतया रस्यतमत्वमापादयन रसपुञ्जगर्वीगुम्भैः काव्ययामास ।

"स कविः कथ्यते स्रष्टा रमते यत्र भारती ।
रसभावगुणीभूतैः अलङ्कारैः गुणोदयैः ॥ (यादवाभ्युदये-१-५)

इति कवितार्किकसिंहोऽयं श्लेषानुप्राणितरसभावगुणीभूतगुणालङ्कारपुष्कलेन ध्वन्यध्वमङ्गलेन श्लोकरत्नेनानेन कविकर्माख्यकाव्यस्वरूपं निरूपयामास । श्लोकस्यास्य भावगाम्भीर्यं रससिरावेधत्वं गुणसंपन्नत्वम् अलङ्कारोज्ज्वलत्वम् अलेखनीयसौन्दर्यत्वं च अलेखनीयमित्येव केवल-

नीयम् । कविकर्म तु सृष्टि न केवलमनुकृति. इति परमहृदयम् । अनुकरणकौशलं शिल्पनैपुणमात्र, न तु विद्याप्रपञ्चकल्पनात्मककविकर्मेति तात्पर्यम् । 'सा विद्या या विमुक्तये', 'विद्यान्या शिल्पनैपुणम्'इतिपराशरब्रह्मर्षिः । विद्याशिल्पसमन्वितमतिमत्कविकर्म काव्यमिति कविनैवोक्तं हंससंदेशे— 'विद्याशिल्पप्रगुणमतिना वेङ्कटेशेन क्लृप्तम्' इति । पटे चित्रलेखनवत् पत्रे अक्षरलेखनकौशलमात्रं शिल्पनैपुणायैव न तु काव्याय कल्पते इत्याकूतम् । इममर्थं कविरेवाह—

"कामं लिखतु संस्थानं कश्चिद्रूपं च भास्वत ।
अभित्तिविहितालम्बमालोकं विलिखेत् कथम्' ॥

इति सङ्कल्पसूर्योदये सुभाषितनीव्यां च ।

"रत्ति परिवट्टे उं लक्ख आलेक्ख दिणअराण वि ण क्खमम् "
[छाया-रात्रि परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ]

इति अच्युतशतकाख्यप्राकृतभाषाप्रबन्धे च । कवि स्रष्टा, न केवलमनुकर्ता इति काव्यरहस्यम् । अनुकाररूपाक्षरसङ्घातात्मकवैकृतिकचित्राकृतिमात्रप्रबन्धाना निर्जीवजडपिण्डत्वात् चित्तमादकत्वाच्च हेयत्वं प्रत्यवायावहत्वं च । 'काव्यालापांश्च वर्जयेत्' इति तेषां वर्जितत्वमवर्जनीयम् । शब्दादिविषयाकृष्टदुष्टचित्तानां प्रलोभनायैव बोभवीतीति जडकाव्यालापस्य असारभूयिष्ठत्वात् अनर्थोदर्कत्वाच्च दूरोत्सारणीयत्वम् ।

# कविसृष्टिप्रकारः



कथं कवे स्रष्टृत्वम् ? तत्सृष्टिश्च कीदृशी ? । 'तदैक्षत बहुस्यां प्रजायेयेति' इति निरुपाधिकदृशोत्तम्भितपारमार्थिकमुख्येक्षतिकर्म-परिकर्मितस्वशरीरभूतजगदेककारणाकारपरब्रह्माख्यपुराणकवेः सृष्टिः जन्माद्यधिकरण ईक्षत्यधिकरणादिसिद्धा । जीवसमष्टिभूतहिरण्यगर्भा-न्तर्यन्तृतया परमात्मनो नामरूपव्याकरणाख्यव्यष्टिसृष्टिः संज्ञामूर्ति-क्लृप्त्यधिकरणसिद्धा । औपनिषदी व्याकृतिर्हि सौत्री क्लृप्तिः । कवि-कर्माख्यसृष्टिः चतुर्मुखशरीरकपरमात्मसंज्ञामूर्तिक्लृप्तितुल्येति विज्ञेया । परमात्मशरीरभूतचतुर्मुखानुगृहीतशब्दब्रह्मसंज्ञामूर्तिकल्पनाख्यदिव्यकवि कर्म सृष्टिः इत्यत्र रामायणमेव निदर्शनम् । तत्तद्गुणकर्मानुसारेण विविधविचित्रसंस्थानरूपतया परिकल्प्यमानानां प्रतिशरीरं भिन्नानां जीवानां तत्सर्वान्तर्यन्तृभूतेन परमात्मना एकेन तत्तन्नामरूपविभक्ततया व्याक्रियमाणत्वं हि उपनिषदधीतं स्रष्टृत्वम् । तदेव स्रष्टृत्वं "स कविः कथ्यते स्रष्टा" इति पूर्वोदाहृतयादवाभ्युदयश्लोकेन कविरुपश्लोकितवान् । जन्माद्यधिकरण ईक्षत्यधिकरणादिप्रसिद्धपरब्रह्मस्रष्टृत्वं —

"क्रीडातूलिकया स्वस्मिन् कृपारूषितया स्वयम् ।
एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत् ॥"

(यादवाभ्युदये १—१)

इति कविरयं प्रपञ्चितवान् । अप्रयोजककेवलानुकरणवाचकलिखधातुमुपे-क्ष्य बहुभवनसङ्कल्पमूलविभक्तनामरूपविचित्रतया विश्वाख्यस्वशरीरैकदेशं

विस्तृणानस्य अवाप्तसमस्तकामस्य अभिन्ननिमित्तोपादानपरमोदार-कारणाकारस्य दयापरस्य परब्रह्मण. विहारव्यापारतया विविधविचित्र-विश्वोदयबोधकजननधातुं कटाक्षयिता दिव्यचक्षु: कविरयं विश्वमहनीय-कविकर्मपरिकर्मितब्रह्मसधर्मता प्रपञ्चयतीत्यभ्यक्षयन्तु चक्षुष्मन्त. । 'ईक्षते नाशब्दम्' 'गौणश्चेन्नात्मशब्दात्' 'जन्माद्यस्य यत.' लोकवत्तु लीलाकैवल्यम्' 'अवस्थितेरिति काशकृत्स्न:' इत्यादि-वाङ्मयमसूत्रप्रतिपादितब्रह्मस्वरूपं तद्गुणसारात्मकतया कविरेवं श्लोकयामासि । 'तदैक्षत,' 'तत्तेजोऽसृजत' इति औपनिषदी क्लृप्ति ब्रह्मविषये कविविषये च तुल्या । ब्रह्मवत् ब्रह्मवित्कविरपि 'तदैक्षत' 'तत्तेजोऽसृजत' । रामायणं, भारत: (ब्रह्मसूत्रम्) च स्रष्टुरस्य द्वे चक्षुषी। ताभ्यामैक्षत । ज्योतिरधिकरणप्रसिद्धचरणाभिधानमङ्गलं परं ज्योति 'आर्यपादौ इमौ मनौ' इति रामायणदर्शितपदत्राणतया दर्शदर्श द्वात्रिंश-त्पद्धत्यष्टाधिकसहस्रपद्यसंख्याकपादुकासहस्राख्यविचित्रसृष्टिं स्रष्टायं कविरचीक्लृपदिति कविसृष्टिसौष्ठवम् । परब्रह्मचरणानन्यपादुकानु-प्रविष्टस्य अस्य सृष्टिरिति रहस्यम् । उक्तमर्थं कविरेवाह —

वेदोपबृंहणकुतूहलिना निबद्धं
विश्वंभराश्रुतिभवेन महर्षिणा यत् ।
व्यासेन यच्च मधुसूदनपादरक्षे !
द्वे चक्षुषी त्वदनुभावमवेक्षितुं न: ॥ (पादुका . २३)

इत्थं त्वमेव निजकेलिवशादकार्षी:
इक्ष्वाकुनाथपदपङ्कजयोरनन्या ।
स्वीयं पदावनि ! मया सुमहच्चरित्रं
सीतेव देवि ! सहजेन कवीश्वरेण ॥ (पादुका . १००५)

इति वाल्मीकिव्यासवेदद्वयात्मकस्वचक्षुष्मत्त्वं प्रतिजानानः पादुकानुप्रविष्टः परब्रह्मपादाश्रयितविभूतिद्वयस्य पादुकायमानत्वं पादुकाधीनत्वं च यथावत् दृष्ट्वा यथादृष्टं तदेव पादुकाख्यं परं ज्योतिः दिव्यविचित्रकाव्यविषयतया प्रथयामासेति कवेः स्रष्टृत्वं काव्यस्य सृष्टित्वं च द्रष्टव्यम् । नेदृशसृष्टिः दृष्टचरीति कवेः दिव्यसृष्टिः ।

---

## काव्यावतारः

श्रीरङ्गे प्रबन्धस्य अवतारः । "रामादीनां कुलधनमिदं रङ्गतां याति रङ्गम्" "रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः" "रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते" "रङ्गं यासौ जनयसि गुणैः भारतीनृत्तरङ्गम्" इति भगवद्राजधानीभूतश्रीरङ्गास्थानस्य भगवत्पादुकापरिचरणैकप्रयोजनस्वसरस्वतीनृत्तरङ्गायमाणत्वं कविना सानन्दमन्वभावि ।

वृत्तिभिर्बहुविधाभिराश्रिता वेङ्कटेश्वरकवेः सरस्वती ।
अद्य रङ्गपतिरत्नपादुके! नर्तकीव भवनीं निषेवताम् ॥

(पादुका....१७)

इति कवेः श्रीरङ्गानन्दानुभवः । 'ज्ञानीत्वात्मैव मे मतम्' इति श्रीभगवतो मतम् । 'आर्यपादौ इमौ मतौ' इति वाल्मीकेः मतम् । तदेव पादुकामतं परमिति प्रख्यातानां सतां परिषदि प्रतिज्ञाय पादुकाशेषत्वकाष्ठानिष्ठः तद्गुणतिरस्कारकतया प्रत्यवतिष्ठमानानाम् अचमत्कारसाङ्केतिकगिरां प्रत्यनीकतया कल्याणैकतानपादुकापरत्व-

प्रतिष्ठापकं पादुकासहस्राख्यकाव्यमिदमवतारयामास । आस्थानं नाम श्रीरङ्गम् । आस्थाननायकश्च सर्वजगन्नायकः सलक्ष्मीकः श्रीरङ्गनायकः। परिषदपि सत्प्रथाप्रख्याता । श्रिया सार्धं सिंहासनासीनेन श्रीरङ्गराजेन राजन्वत्यां रसिकविपश्चिदञ्चितमहापरिषदि यामिन्यामेकस्या परिषन्नायकमुखोल्लासनं परिषत्कर्णरसायनं च काव्यमिदं पादुकाप्रेरितकविमुखादञ्जसा समञ्जसमुदयासीत् । निखिलशब्दब्रह्मनिदानभूतभगवत्पादुकामञ्जीरशिञ्जारवस्य श्रीशठकोपदृष्टसर्वीयदिव्यद्रमिडोपनिषन्नादस्य च तात्त्विकाद्वैतं व्यञ्जयता पदत्राणपद्यसहस्रनादेन श्रीरङ्गनायकमानन्दयामास । आनन्दमयं ब्रह्मैव परमानन्दयतः काव्यस्यास्य आनन्दमयत्वं दण्डापूपिकातः सिद्धम् । निजपादपातिव्रतीसमाख्यायाः निज पाद एव तदन्यतया लब्धप्रतिष्ठायाः पादुकालक्ष्म्याः चरित्रं "सुमहत्" इति परमोदारो भगवान् तदेव चरितं सानन्दं निशमयतिस्मेति न कोऽप्यत्र विस्मयः । इदमेव दयाधनस्य परमोदारस्य जगत्पतेः अनुरूपम् । पादुकायाः शेषत्वानन्त्यरसं तदायत्तनिजशेषित्वानन्त्यविशिष्टश्रीरङ्गनाथः सादरमनुबभूवेति परमो रसः । पादुकायत्तभगवत्पदस्वरूपं पादुकानादानुनादसहस्रनादेन भगवन्तं भागवतांश्च सप्रश्रयं श्रावयामास । रामस्य चरितं सीतायाश्चरितं महत् इति वाल्मीकेः हृदयम् । तदुपबृंहणतया ततोऽपि मधुरं कवेः हृदयं यद्रामस्य चरितं सीतायाः चरितं महत् तदेव पादुकायाः सुमहच्चरित्रमिति । यथा श्रीः भगवतः सहधर्मचरी तथा पादुकाश्रीः भगवत्पदसहधर्मचरी इति श्रुतिहृदयं धीरोऽयं कविः उन्नयन् भगवत्पदपादुकाविभूतितया जगदिदमशेषमुन्निनाय ।



"अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ।
इति सीतापि यद्वृत्तिमियेष प्रणमामि ताम् ॥"
(पादुका २६१)

उपन्नं संवित्तेः उपनिषदुपोद्घातवचनं
तव श्रावं श्रावं श्रुतिसुभगमन्तर्मणिरवम् ।
विजृम्भन्ते नूनं मधुमथनपादावनि ! मम
द्रवीभूतद्राक्षामधुरिमधुरीणाः फणितयः ॥ ( . ४७१)

इति श्रुतिपरिपणपादुकाचारित्रमाधुर्यातिशयं प्रकाशयन् श्रियः श्रियः परिबृढस्य च हृदयरञ्जकतया काव्यमिदमुदश्चयामास । भगवत्पदत्र-तया स्वशिरस्त्रतया च पादुकां प्रतिष्ठाप्य कवितायतने श्रीरङ्गास्थाने कवितार्किकसिंहोऽयं वेदान्तदेशिकः तत्तादृशास्थिरप्रतिष्ठामलभत इति पादुकासहस्रावतारवृत्तान्तः । तथात्वं कविनैव गीयते ——

"अनुकृतनिजनादां सूक्तिमापादयन्ती
मनसि वचसि च त्वं सावधाना मम स्याः ।
निशमयति यथासौ निद्रया दूरमुक्तः
परिषदि सह लक्ष्म्या पादुके ! रङ्गनाथः ॥ (पादुका १९)

आकर्ण्य कर्णामृतमात्मवन्तः गाथासहस्रं शठकोपसूरेः ।
मञ्जुप्रणादां मणिपादुके ! त्वां तदेकनामानमनुस्मरन्ति ॥ ... २५

मुरभिन्मणिपादुके ! भवत्याः स्तुतिमाकर्णयता मया निबद्धाम् ।
अवधीरयसीव मञ्जुनादैः अचमत्कारवचांसि दुर्जनानाम् ॥ ३८२

प्रख्यातानां परिषदि सतां कारयित्वा प्रतिज्ञां
प्रायेण त्वां प्रथितविभवां वर्णयन्ती मया त्वम् ।
पादन्यासक्रममनुगुणं प्राप्य रङ्गाधिराजात्
पद्यारम्भान् गणयसि परं पादुके स्वैर्निनादैः ॥ ( .४०१)

त्वय्यायत्तौ भगवति ! शिलाभस्मनोः प्राणदानात्
आस्त्रीबालं प्रथितविभवौ पादपद्मौ मुरारेः ।
तामेवाहं शिरसि निहितामद्य पश्यामि दैवात्
आत्माधारां जननि ! भवतीमात्मलाभप्रसूतिम् ॥ ( ९९८)
इत्यादिभिः ।

## पादुकातत्त्वम्

"इक्ष्वाकुनाथपदपङ्कजयोः अनन्या" पादुका इति पादुकातत्त्वं कविना प्रकाश्यते। 'अनन्या हि मया सीता भास्करेण प्रभा यथा, अनन्या राघवेणाहं भास्करेण प्रभा यथा ।' इति सीतारामयोः प्रभाप्रभावतोः इव अनन्यत्वं वाल्मीकिना दर्शितं श्रीरामभद्रपादपादुकयोः अतिदिशन् वेदान्तदेशिकोऽयं कविः पादुकातत्त्वं प्रपञ्चयामास । 'सहसीतं न्यवेशयत्' इतिवत् 'चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ' इति सादरमाशंसमानेन वाल्मीकिना अतिदेशोऽयमभ्यनुज्ञात इति नीतिरसिकानां हृदयङ्गमः । अतोऽयं समञ्जसमुपपद्यते । उपलभ्यते चायमर्थः अनुशासनात् । 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति पाणिनिसूत्रेण (३-२-१७३) पदधातोः शीलार्थे उकञ्प्रत्यये

पादुकाशब्दो निष्पन्नः । परमात्मनः पदे अभिलषणशीला, पतनशीला, स्थानशीला, भंजनशीला, दयावर्षणशीला, निखिलहेयप्रत्यनीकतया पूर्वोत्तरसर्वाघहननशीला, निरन्तरभगवच्चरणैककामनाशीला, भगवच्चरण-कमनीयतापोषणशीला, दीनपरित्राणार्थं गमनशीला, शरणशीला च खलु पादुका इति सहपठितधात्वन्तरविन्यासस्वारस्यात् भगवत्पद-निष्पन्नत्वं तन्निष्णातत्वं च पादुकाया. स्वरसतो जाघटीति । पाणिने-रिदं सूत्राचित्रम् । ईदृक् च बहूपलभ्यते इति सूत्ररचनाहृदयालवः । 'वासुदेवार्जुनाभ्यां वुन्' (४—३—९४), 'अरस्योश्च' (उणा—३), इत्यादीनि द्रष्टव्यानि । भगवत्पदपद्मयोः अनन्यत्वं प्राप्ता पादुका यथा मोमुदीति तथा स्वाश्रितानपि अविशेषतया तदेव पदं प्रापयित्वा मोदयतीति परमोदाराया. पादुकायाः ताच्छीलिकस्वच्छस्वरूपं चरित्रं च उकञ्प्रत्ययबलात् सहपाठस्वारस्याच्च सम्यगुपलभ्यते। वाच्यभूत-पादुकायाः स्त्रीत्वद्योतकटाप्प्रत्ययकलया " इक्ष्वाकुनाथपदपङ्कजयोः अनन्या " इति सूनृतोक्तिः औपनिषदशृङ्गाररसशृङ्गायमाणत्वं निर्मल-शब्दानुशासनमूलकमिति उत्कृष्टरसनिष्णातानाम् आस्वादनीयतमम् । एवं परमपावनभगवत्पदपद्मानन्यपादुकाश्रियः यथावस्थितदिव्यतत्त्वम् उपपद्यते चाप्युपलभ्यते च । पादस्य पुंस्त्वं पादुकाया. स्त्रीत्वं च पादस्य पादुकया सह औत्पत्तिकगाढोपगूढत्वं सरसं व्यञ्जयति । "रामपादसहधर्मचारिणी" (पादु....७९) इति कवे कण्ठतो निर्देशः । एवं जयति श्रीरङ्गनाथपदरञ्जनीभूतपादुकातत्त्वं तत्पदनिष्पन्नतया तत्पदानन्यतया तत्पदत्राणतया च । तादर्थ्यमूर्ति. पादैकपातिव्रतीमयी पादुकालक्ष्मी' इति पादुकातत्त्वं सहस्रेऽस्मिन्समग्रं प्रपञ्च्यते । अतः पादुकाधीना भगवत्पदसरसगतिः इति कविना गीयते —

रङ्गेशपादकमलात् त्वधीनवृत्तेः
अन्येषु केषुचिदलक्ष्यमनन्यवेद्यम् ।
आम्नायगूढमबहिर्मणिभिः कणद्भिः
नेदीयसां प्रथयसीव निजानुभावम् ॥ (पादुका....४३८)

इति । सपादुकभगवत्पदसञ्चारसमयः काव्यस्यास्य सञ्चारपद्धतिरसः । पादुकायाः ईशपदत्रत्वम् ईशितव्यशिरस्त्रत्वं चेति ईशेशितव्ययोः ईश्वरचेतनतत्त्वयोः शेषिशेषतया पादुकाया एव संधातृत्वं विज्ञेयम् । पादुका भगवन्तमवतारयति चेतनांश्च उत्तारयति । तस्य अवतारस्य तेषामुत्तारस्य च पादुकायां समन्वयः संघटते । भगवान् हि पादुकायाः शेषी । चेतनास्तु पादुकायाः शेषाः । भगवच्छेषत्वं चेतनानां पादुकाशेषत्वात् सिद्ध्यति । 'आर्यं मार्गं प्रपन्नस्य नानुमन्येत कः पुमान्' इति अयमेव भरताचरितमार्गः पुंसामभ्यर्हितः आर्यमार्गः इति वाल्मीकिः अभ्यनन्दत् । 'आजगामाथ गोपीनां दृष्टिपूतेन वर्त्मना' इति प्रपन्नदृष्टवर्त्मानुवर्ती भगवान् दयापरः इति पराशरदृष्टिः । सर्वशरण्यपदत्रतया सर्वचेतनशिरस्त्रतया च विराजमाना त्यागयोगात्मिका परदेवता पादुका इति कविगीतं परमं तत्त्वम् । किंबहुना, भगवतः करुणैव मूर्तिमती पादुका इति कवेः सरस्वती —

असूर्यभेद्यां रजनीं प्रजानामालोकमात्रेण निवारयन्ती ।
अमोघवृत्ति मणिपादरक्षे! मुरद्विषो मूर्तिमती दया त्वम् ॥
(पादुका-४८४)

इति । करुणामूर्तेः श्रियः अवतारभूता पादुका इति सचमत्कारकविरचनोपपत्तिः ।

मुक्तांशुकेसरवती स्थिरवज्रदंष्ट्रा प्रह्लादसंपदनुरूपहिरण्यभेदा ।
मूर्तिः श्रियो भगवति माधवपादरक्षे ! नाथस्य नूनमुचिता नरसिंहमूर्तेः ॥ (८४६)

इति कविचमत्कारः । नरसिंहसटाधरत्वशठकोपवकुलधरत्वद्योतककेसरशब्दं प्रयुञ्जानः कविरयं कवितार्किककेसर्येव। एवं खलु जयति पादुकाश्रीः । 'साहि श्रीरमृता सताम्' इति पादुकातत्त्वं प्रकाशयन्, "सन्तः जयन्ति" इत्यादि, "जयन्ति सन्तः" इत्यन्तं कविरयम् अन्तादिक्रमेण अनाद्यन्तपादुकाप्रभावं प्रबन्धेऽस्मिन् प्रथयामास । ब्रह्मास्तित्वविज्ञानिनः 'सन्तः' इति श्रुतिः विदामास। स्वशिरोभूषणतया भगवत्पादुकास्तित्वविज्ञानिनः 'सन्तः' इति निर्दिशन् वेदान्तदेशिकोऽयं श्रुतिमनीषाविस्तृणान पादुकाशेषत्वचरमावधिकाष्ठामातिष्ठन् सन् परमास्तिकभगवत्पादुकास्तित्वविज्ञानिना सता दीर्घमङ्गलाशासनरूपप्रबन्धस्यास्य शुभारम्भणीयत्वं सिद्धारम्भत्वं शुभोदर्कत्वं निरवधिकशुभभूयिष्ठत्वं च प्रपञ्चयन् पादुकापरत्वं प्रख्यातानां सतां परिषदि प्रथयाबभूव । 'ब्रह्मविदाप्नोति परं' 'सत्यंज्ञानमनन्तं ब्रह्म' इति परमप्राप्यतया श्रुत्युद्घोषितं परं ब्रह्मैव, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः', 'विष्णोः पदे परमे मध्व उत्सः' इत्यादिभिः विष्णुपदायत्तपरमतया विशिष्य श्रुतिः प्रदर्शयति। विष्णुपदस्य परमत्वं पश्यन्ती श्रुतिः तदेव परमं तत्त्वं 'चरणं पवित्रं विततं पुराणं, येन पूतस्तरति दुष्कृतानि, तेन पवित्रेण शुद्धेन पूताः, अतिपाप्मानमरातिं तरेम, लोकस्य द्वारमर्चिमत्पवित्रं, ज्योतिष्मद्भ्राजमानं महस्वत्, अमृतस्य धारा बहुधा दोहमानं, चरणं नो लोके सुधिता दधातु' इति सामानाधिकरण्येन निर्दिशति । ज्योतिर्भूत-

भगवच्चरणस्य आत्यन्तिकशोकनिवारकत्वं परमप्राप्यत्वं च दर्शयन्नेव द्रमिडोपनिषदमवतारयन् श्रीशठकोप. 'श्रीचरणं नारायणं केशवं परं ज्योति.' 'திருவடியை நாரணனை கேசவனை பரஞ்சுடரை' (४-९-११) इति पठन श्रुतिनिर्दिष्टसामानाधिकरण्यहृदयं समञ्जसमुदञ्चयामास। क्लेशहन्तृत्वं हि केशवत्वम् । अनुशासनसिद्धोऽयमर्थ । 'क्लिशेरन लो लोपश्च' इति पाणिनिसूत्रेण (उणा-५) क्लिशेर्धातो: अन् प्रत्यये लकारलोपे हन. वधादेशे डप्रत्यये च क्लेशहन्तृत्वार्थे केशवशब्दनिष्पत्तिः । 'माशुचः' इति प्रवक्तुः दयापरस्य परमात्मन. केशव इति संज्ञा । एवं श्रीशठकोपहृदयमनुशासनमत्यन्तमनुगृह्णाति । अतिरमणीयोऽयं श्रुतिनय. । तस्यैव श्रुतिनयस्य द्रष्टु श्रुतिहृदयोन्नयनकुतूहलिन. वाल्मीके 'रामपादौ उपस्पृशन्' 'आर्यपादौ इमौ मतौ' इति अतिदेश । 'योगक्षेमं वहाम्यहम्' इति भगवदुक्तं तदेकाधीनविश्वयोगक्षेमावहत्वं तत्पादुकायत्तमिति दिव्यचक्षुरादिकवि. निश्चिकाय । उभयविभूतिरपि भगवच्चरणायत्तसत्ताकेति तत्त्वम् । चरण एव चरणत्राणमिति भरतमतम् । कवेः भरतमतनिष्ठत्वं कविनैव उक्तम्—

बहुविधपुरुषार्थग्रामसीमान्तरेखा
　　हरिचरणसरोजन्यासधन्यामनन्यः ।
भरतसमयसिद्धां पादुके ! भावयंस्त्वा
　　शतमिह शरदस्ते श्रावयेयं समृद्धिम् ॥ ९९५ ॥

इति । तथैवाशास्ते पादुकापरत्वम्—

तद्विष्णोः परमं पदत्रयुगलं त्रय्यन्तपर्यन्तगं
चिन्तातीतविभूतिकं वितरतु श्रेयांसि भूयांसि नः ॥ (४२) इति ।

अतः पादुकाया जन्म कर्म च दिव्यम् । अजायमान परमः बहुधा विजायते । अजायमाना परमा तत्पादुका च तदनुजनु. तदनुरूपा तदर्थमेव ततोऽपि महनीयतया च विजायते । भगवत्पादादेव पादुकाया अवतार इति पादुकावतारस्य गरीयस्त्वं धीरा. परिजानन्ति । 'अजानन्तस्त्ववजानन्ति मूढा.' इति पादुकावतारविपयेऽपि तुल्यम् । अवजानतां तेषा वचनानि 'अचमत्कारवचासि दुर्जनानाम्' इति कविः निरदिशत् निराकरोच्च । श्रीशठकोप इति पादुकाया. समाख्या । शठकोपाख्या विश्वेशाना पादुका, पादुकात्मा कुरुकाधीशः शठकोप. इति तत्त्वम् । तत्प्रकाशकः प्रबन्धोऽयम् । परमत्वं नाम पादुकात्वं, परमैकान्तित्वं नाम पादुकैकान्वित्वं च इति परमरसः । विष्णुपदी पादुका आनन्दमयीति परमतात्पर्यम् । आनन्दमयस्य परमात्मन. शेषित्वानन्त्यमानन्दयित्री तत्पदशेषत्वानन्त्यनिरतिशयानन्दमूर्ति. पादुका । एषा ह्येवानन्दयाति इति किल वाल्मीकेः आनन्दवल्ली । 'ततश्शिरसि कृत्वा तु पादुके भरतस्तदा । आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वित ॥' इति वाल्मीकेःहर्ष. । ततोऽप्यतिहर्षतया कविरयं पादुकापरमैकान्ती पादुकाया. आनन्दमयत्वमन्वभूत् ।

निस्संदेहनिजापकर्षविषयोत्कर्षोऽपि हर्षोदय-
प्रत्यूढक्रमभक्तिवैभवभवद्वैयात्यवाचालितः ।
रङ्गाधीशपदत्रवर्णनकृतारम्भैर्निगुम्भैर्गिरा
नर्मास्वादिषु वेङ्कटेश्वरकविः नासीरमासीदिति ॥ (पादुका १३)

भरतशिरसि लग्नां पादुके ! दूरतस्त्वां
स्वतनुमपि ववन्दे लक्ष्मणः शेषभूतः ।

किमिदमिह विचित्रं नित्ययुक्तः सिषेवे
दशरथतनयस्सन् रङ्गनाथ स्वमेव ।। (७.५७)

इति हि कवेः अनुभवः । एवं निखिलहेयप्रत्यनीककल्याणैकतानभगव-त्पादुकापरत्वमनुभवन् भावुकाननुभावयन् भगवन्तं प्रीणयन् सर्वश्रुति-मनोहरं सहस्रमिदं प्रकाशयामास ।

## काव्यार्थसंक्षेपः

उक्तार्थाः सरसं सगुणं सालङ्कारं सचित्रं सप्रपञ्चं सहस्रेऽस्मिन् तत्तत्पद्धत्या निपुणतरमुपनिबद्ध्यन्ते। तत्तत्पद्धत्यर्थः तत्तत्पद्धत्यादिम-श्लोकेन उपक्षिप्यते, चरमश्लोकेन संपूर्यते । आनुष्टुभः प्रथमश्लोकः चरमस्त्वार्या । चरमश्लोकः तत्तत्पद्धत्यर्थपूरक उत्तरपद्धत्यर्थसूचकश्च । एवमुत्तरोत्तरक्रमभाविनी पद्धतिगतिः । सर्वचरमश्लोकस्य सिंहावलोक-नेन अन्तादिक्रमः । काव्यं द्वात्रिंशत्पद्धतिसंख्याकम् । पादुकानुरूप-मानुष्टुभाक्षरसंख्याकत्वं ब्रह्मविद्यासंख्याकत्वं च सुतरामुपपद्यते । पादु-कायाः 'पद्धतिः' उपपन्नरमणीयेति काव्यरचनोपपत्तिः । परविद्यामयी भगवत्पादुका । उपनिषदधीता द्वात्रिंशद्ब्रह्मविद्या । तत्तद्विद्यास्थाने पादुका स्वयमेव स्थित्वा सर्वेषां चेतनानां भगवद्वशीकरणाय प्रभवतीति पद्धतिरचनोपपत्तिभूयस्त्वम् । सदाद्या ब्रह्मविद्या । प्रबन्धेऽस्मिन् पादुका च "सन्तः ....जयन्ति" इति सन्मूला सोम्या, "जयन्ति सन्तः" इति सत्फला च उत्तरोत्तरमभिवर्धते । तत्तत्पद्धत्युपक्रमश्लोकस्य तत्त-त्पद्धतिसारत्वात् पद्धत्यर्थसङ्ग्रहः नात्र विशिष्य प्रतन्यते । तत्तत्पद्ध-

-यर्थं सुलभावगाहार्थं किञ्चिदेवात्र दिङ्मात्रं सूच्यते । नादपद्धत्यां तु अवश्यापेक्षिता. प्रधानाशाः कतिचन विशिष्य लिख्यन्ते । तथाच—

१ **प्रस्तावपद्धत्याम्**— उक्तप्रकारेण पादुकोत्तमनपावनाना सतां मङ्गलाशासनेन प्रस्तुतस्य श्रीरङ्गनाथस्य दिव्यपदत्राणस्य स्तव्यतया प्रस्तावः । पादुकाशेषत्वकाष्ठाया पादुकासहस्रोदयः इति प्रस्तावरस. । सप्रश्रयप्रस्तावोऽयं श्रीरङ्गनाथपदपर्यन्तोच्छ्राय इति प्रस्तावस्य सफल-शुभोदय· ।

२ **समाख्यापद्धत्यां**— द्रमिडोपनिषद्द्रष्टु श्रीशठकोपस्य नाम-वहनात् तन्नामनिरूपितकल्याणगुणान् पादुकाया कवि· अनुसंधत्ते । शठकोपनामतः पादुकाया पादुकाविषयतः शठकोपस्य च अन्योन्या-द्वैतनिष्ठा । द्रमिडोपनिषन्निवेशशून्यानपि लक्ष्मीरमणाय रोचयिष्यन् शठकोप. स्वयमेव पादुकाख्यमूर्त्यन्तरं परिजग्राहेति पादुकाया. शठकोपसंज्ञामूर्तिक्लृप्तिः ।

३ **प्रभावपद्धत्यां**— शठकोपसमाख्यानिर्दिष्टायाः पादुकायाः आश्रितरक्षकताविभूतिद्वयनिर्वहणाद्याक्षिप्तसर्वशक्तित्वापरपर्याय निरतिशयप्रभावो वर्ण्यते । सर्वाधारभूतस्य भगवतोऽपि पादुकाधारत्वात् इयामूर्ति· पादुका निरवधिकप्रभावेति तत्प्रभावनिष्कर्षः । "... वयमामनाम·, त्वामेव साक्षादधिदैवतं नः" इति निष्कर्षशिरस्केयं पद्धतिः । "उन्नतानामवनतिः नताना यत्तचोन्नति." । इति पादुका-प्रभावोन्नतिः । प्रपन्नाना सता शरण्यसाम्यं शरण्यस्य सतो भगवतः प्रपन्नसाम्यं प्रपन्नानां च मिथः परमसाम्यं च अन्योन्यमाल्यपरिवृत्ति-

न्यायेन दिशन्ती दयाशक्तिमयी पादुकेति पादुकाविजयो जोघुष्यते ॥ "निषादाना नेता कपिकुलपति. कापि शबरी, कुचेल· कुब्जा सा व्रजयुवतयो माल्यकृदिति । अमीपा निम्नत्वं वृषगिरिपते उन्नतिमपि, प्रभूतः स्रोतोभि· प्रसभमनुकम्पे! समयसि ॥" इति कवे· दयाशतकश्लोकस्य पद्धतिरियं विस्तृतिः । सता शिर विष्णो पदेन सङ्घटयन्ती अघटितघटिनीयं शक्ति. सार्वभौमी । भगवच्छेपत्वानन्त्यमहिम्ना पादुकाया विश्वविधरणप्रभाव इति पद्धतिभाव ।

४ **समर्पणपद्धत्यां**— तथाप्रभावविस्तारया. पादुकाया. प्रपन्नपरित्राणोपयुक्तवात्सल्यादिकल्याणगुणा विशिष्य कीर्त्यन्ते । "यामर्पयति दीनानां दयमानो जगद्गुरु." इति भगवता भरताय निजपदप्रतिनिधित्वेन विश्वयोगक्षेमार्थमर्पिताया. पादुकाया तत्तादृशगुणगरिमसमृद्धत्वं वर्ण्यते ।

५ **प्रतिप्रस्थानपद्धत्यां**— प्रपन्नभरतशिर.प्रतिष्ठितायाः पादुकायाः परमोदारत्वविश्वाह्लादकत्वादिलोकोत्तरगुणगरिष्ठत्वं प्रकाश्यते ।

६ **अधिकारपरिग्रहपद्धत्यां** — साकेताधिकारपरिग्रहानुरूपसाम्राज्यगुणा. प्रख्याप्यन्ते । प्रजाः सर्वा स्थिरचरत्वाद्यविशेषतया जनपदजनिधनिकतामात्रेण स्वतया सादरं परिपाल्य शाश्वतिकपरमपुरुषार्थं प्रापय्य च पादुका मोदतेस्मेति तस्या उदारचरितं वर्ण्यते ।

७ **अभिषेकपद्धत्यां**— परमप्रयोजनवदर्थावबोधिभगवच्छासनमूर्त्याः पादुकायाः अनन्यलक्ष्यभगवदनुग्रहसङ्कल्पात् विश्वाधिपत्ये मूर्धाभिषिक्तत्वं स्तूयते । लोककण्टकानां प्रजाभक्षकाणा पशुप्रायाणां

नाममात्रभूपालाना मुखात् भूमिमिमामुद्दिधीर्षु भगवान् पादुका-मूर्धाभिषेकं संकल्प्य अयोध्याया पादुकार्थमभिषेचनमिति आभिषेचनिक-भाण्डं प्रदक्षिणीकृत्य, चित्रकूटे निजचरणनखमणिचन्द्रिकानिर्झरेण पादुका सुसुखमभ्यषिञ्चन् । तस्यैवाभिषेकस्य पुनरुक्ततया वसिष्ठ-भरतादिभि. निर्वर्तितपादुकाग्र्याभिषेचनं चारु वर्ण्यते ।

८ निर्यातनापद्धत्यां—मारुतिमुखात् सत्यविजयिन श्रीभगवत: पुनरागमनं श्रुत्वा पादुका परमानन्दभरिताभूत । ता एव पादुकां स्वकृतन्यासप्रत्यर्पणेन भग्न. भगवत चरणारविन्दे साञ्जलिरकलयत् । सैव निर्यातना पादुकाया महोत्सव आसीत् । अभिषेको भगवदुत्सव , निर्यातना पादुकोत्सव । अनुवृत्तरामभाव श्रीरङ्गनाथ. निर्विष्टचक्रवर्ति पदा पादुकाम् अधुनापि सचमत्कारं पदेन भजतीति सचमत्कारं निर्यातनावृत्तान्त चित्रित ।

९ वन्दिवैतालिकपद्धत्यां — यथाकालं पादुकाया भगव-त्पादारविन्दारोहस्य वेदान्तान वन्दिवैतालिकीकृत्य तन्मुखेन पादुका स्तूयते ।

१० शृङ्गारपद्धत्यां— परमशृङ्गारमूर्ते श्रीरङ्गनाथस्य सत्त्वप्रवर्त-कस्य पुरुषोत्तमस्य शृङ्गारव्यापारनिदानभूताया. पादुकाया: औपनिषद-शृङ्गारमङ्गलत्वं चारु विन्यस्यते । धार्मिकदंपत्यन्तरङ्गकृत्यपरस्पर-हृदयपरिवर्तनव्यापार खलु शृङ्गार । अमतां चित्तमादकतिर्यक्चेष्टा. शृङ्गाराभासा. । प्रपन्नसार्वभौमस्य श्रीशठकोपस्य शृङ्गार. साक्षान्म-न्मथमन्मथस्य परब्रह्मण शृङ्गारस्फोरक इति पादुकाया शृङ्गारपारमै-कान्त्यं व्यज्यते ।

११ **सञ्चारपद्धत्यां** — पादुकासञ्चारस्य रमणीयत्वं महनीयत्वं सार्वजनीनत्वं च सप्रपञ्चमुपवर्ण्यते । कुशकण्टकमर्दकतया भगवच्चरणाग्रगामित्वं, भगवत्पदपादुकयोः अन्योन्यपरतन्त्रत्वं, पादुकाधीनभगवत्परिक्रमत्वं, भगवदधीनपादुकाविहारत्वं, भगवत्पदस्य पादुकया दीर्घितत्वं, चेतनशिरसा भगवत्पदेन दृढघटकदयाशक्तित्वं, पादुकायाः सर्वरक्षकत्वं दीनानुकम्पित्वं पतितपावनत्वं चेतनोत्तारकत्वं भगवदवतारकत्वं कल्याणैकतानत्वं भगवत्पदेन सार्धमुपनिषदटवीषु क्रीडमानत्वं, सपादुकस्यैव भगवतः सर्वलोकशरण्यत्वं, करुणावर्षुकत्वम् इत्यादित्रैविक्रमापदानानुगुणकल्याणगुणगणप्रगुणितपरमोदारपादुकासञ्चार — व्यापारा प्रपञ्च्यन्ते ।

मा मे भूयात् सपदि भवती पादुके! तापशान्त्यै
यामारूढो दिवमिव शुभैः सेव्यमानो मरुद्भिः ।
सौदामन्या सह कमलया सह्यजावृद्धिहेतु.
काले काले चरति करुणावर्षुक. कृष्णमेघ. ॥ (पादुका.. ३११)

इति पद्धतिसञ्चारतः काव्यस्य करुणावर्षुकत्वम् ।

१२ **पुष्पपद्धत्यां** — करुणावर्षुकश्रीकृष्णमेघसञ्चारसमयेषु मरुद्गणाहितपुष्पवर्षस्य पादुकाया पर्यवसानं प्रदर्श्यते । भगवदाराधनं भगवत्पादुकाराधनपर्यन्तमिति भावः । भगवदाराधनपरमार्हतया भगवच्छास्त्रसिद्धकुम्भाग्निस्थण्डिलबिम्बरूपस्थानचतुष्टयानुरूपपादुकाराधनपरमार्हस्थानचतुष्टयतया परमपदसत्यलोकसाकेतश्रीरङ्गस्थानानामुत्तरोत्तरमहनीयत्वं विस्तीर्यते । एवं निरुपाधिकनिजकृपयैव केवलं सतां कामधेनुतया विराजमानायाः श्रीरङ्गदिव्यायतनायाः पादुका-

लक्ष्म्याः पुष्पाद्यर्चनं व्याजमात्रमेव । तया तत्रापेक्षितमिति पादुका-परमौदार्यं प्रकाश्यते ।

१३ **परागपद्धत्यां** — अहल्यानिर्मलदेहनिर्माणनिदानभूतपरमाणु-रूपपादुकामञ्चारकलिपरागमङ्गल्यमाशास्यते । अपरागा पादुकालक्ष्मीः, अतमः परोरजश्च तद्विष्णोः परमं पदमपि तथाकरोति निजरजसेति पादुकापरागमङ्गल्यसार्वभौमत्वम् । चेतनान् परमात्मनि सरागान् अपरमात्मनि विरागांश्च स्वपरागै विदधातीति पादुकाया विश्वपावन-त्वं परमविचित्रम् । पाषाणकल्पतापन्नत्वं न मोक्षः, भगवत्पादुका-परागसंस्पर्शमहिम्ना संपन्नतच्छेषतया आविर्भूताष्टगुणसंपन्नत्वमेव मोक्षः इति दिदर्शयिषुः कविः गौतमधर्मदाराणां परमपावनपादुकापरागेण पाषाणत्वविनिर्मुक्ततां निदर्शयन् सचमत्कारं पद्धतिमुपक्षिपतीति चारुतमोऽयं सरसालङ्कारपद्धत्यवतारः ।

१४ **नादपद्धत्यां** — शब्दब्रह्मनिदानभूतानां पादुकागर्भमणि-प्रसूतानां दिव्यनादानां निरतिशयपरमानन्दमयत्वमनुभवन् पादुका-नादानुज्ञानसमुज्जृम्भितमङ्गलारम्भगुणगुणनिकया महनीयानुनाद-रमणीयपद्यनादे नादावसाननिलयः आनन्दमयः रमारमणः श्रीरङ्ग-नायकः आनन्द्यते । नादोपनिषदियं पद्धतिरिति संप्रदायः । वेदा एव पादुकायाः भूषणानीति उत्प्रेक्षया पादुकायाः भगवत्पादानुरूपं परम-माभिरूप्यं व्यज्यते । अभिरूपं हि भूषणानि शोभयन्ति । अभिरूपस्य भूषणतया भूषणानां भूषणत्वम् । पादुकाभूषणतयैव वेदानां वेदत्वमिति भावः । भगवत्पादैकपातिव्रतीमूर्तिः श्रीशठकोपः खलु अभिरूपः । 'अप्रमेयं हि तत्तेजः यस्य सा जनकात्मजा ।' इति वाल्मीकिः ।

तथैव अप्रमेयं हि परमात्मपादतेजः यस्य सा मणिपादुका इति कवे. कैमुतिकहार्दोल्लेखः । भगवत्पादस्य सर्ववेदमेयत्वम् अप्रमेयत्वं च साकूतं श्रुतिरुल्लिखति । पाद. सपादुकः खलु इति उल्लेखभावगर्भ-गंभीरत्वम् । 'मृगो न भीम.कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेषु अधि-क्षियन्ति भुवनानि विश्वा' इति हि श्रुतिस्तुतिः । देवताभिधानत्वे 'कायं न चरति', सर्वत्र चरति, इत्यत्र यास्कनिरुक्तिः । गिरिष्ठत्वं नाम पादुका-प्रतिष्ठितत्वमिति विज्ञेयम् । अतः भगवत्पदसञ्चारकपादुकानादस्य आनन्दमयत्वं भगवत्पारम्यबोधकत्वं च श्रुत्या सादरं प्रत्यबोधि । गिरिष्ठस्यैव त्रिविक्रमस्य 'इदं विष्णुः विचक्रमे त्रेधा निदधे पदं,' 'विचक्रमाणस्त्रेधोरुगाय' इत्यादिश्रुत्युरुगीति । भावोऽयं सञ्चारपद्ध-त्या प्रपञ्चित. । परब्रह्मानन्दकदिव्यनादात्मिकाया. पादुकाया. पारम्यं प्रतिपादयितुम् अहमहमिकया प्रवृत्तानां शब्दपरमाणुसमुदायभूतानां वेदाना मिथस्सङ्घर्षसञ्जात किमपि रञ्ज शिञ्जितमिति पूर्वपद्धतिसङ्ग-त्या पद्धतिमिमां सरसमवतारयति ।

मणिनिकरसमुत्थैः सर्ववर्णा मयूखैः
प्रकटितशुभनादा पादुके ! रङ्गभर्तु ।
निखिलनिगमसूते· ब्रह्मण· तत्सनाथाम्
अवगमयसि हृद्यामर्धमात्रां चतुर्थीम् ॥ (पादुका....८८१)

इति प्रकीर्णपद्धतिश्लोकः एतत्पद्धतिप्रधानार्थं सरसं सङ्गृह्णाति । संक्षिप्तस्यास्य भावस्य पद्धतिरियं विस्तृतिरिति पादुकानादविस्तर. । दुर्विज्ञेयं नादतत्त्वम्। तद्विषयेचार्थभेदाः तीर्थकराणाम् । पादुकाविषयतया स्वाभिमतार्थमस्यां पद्धत्यां समञ्जसं कविः ध्वनयति । विज्ञाते हि कवेः

मते पद्धतिभावा: शक्या विज्ञातुमिति तदत्र किञ्चिदुपन्यस्यते ।

प्रणवप्रतिपाद्यं हि परं ब्रह्म। किं तद्ब्रह्म यत् प्रणवेन प्रतिपाद्यते ? निरुपाधिकसर्वरक्षकं तत्, तदेव सत्, तदभिज्ञा सन्त. इति कवे: अभिमतम् । कुत एतत् ? सर्वरक्षको हि अकारवाच्य: प्रणववाच्यश्च । तच्च कुत. ? लक्षणभूतादनुशासनात् लक्ष्यभूतात् वेदशासनाच्च। किं तदनुशासनं किञ्च तच्छासनं याभ्यामर्थोऽयं शक्यो विज्ञातुम् ? उच्यते—अवति रक्षति इति अ: रक्षक: । अवतेर्ड । अकारो रक्षकवाचक इति अनुशासनात् सिद्ध्यति । अकारस्य सर्वशब्दप्रकृतिभूतत्वात् प्रकृतिभूतस्य अकारस्य निरुपाधिकसर्वरक्षकवाचकत्वात् तत्प्रकृतिकसर्वशब्दाना सर्वरक्षकवाचकत्वमनुशासनमनुगृह्णाति। किं तत्त्वं यस्य निरुपाधिकसर्वरक्षकतया सर्वशब्दवाच्यत्वं प्रतिज्ञातम् ? । गोविन्द इति ब्रूम: । कुत ? 'गवादिषु विन्दे संज्ञायाम् श: ' इत्यनुशासनेन (३-१-१३८) सर्वशब्दवाच्यतया संज्ञात्वेन सिद्धं गोविन्दसमाख्यं तत्त्वं तत् । नारायण, वासुदेव., भगवान्, इतिवत् गोविन्द. इति तत्र भगवत: संज्ञा । एवमनुशासनाद्विज्ञायते सर्ववेदशब्दवेद्य. गोविन्द इति । स्मर्यते च — 'अकारो विष्णुवाचक: ' इति, 'वेदाक्षराणि यावन्ति पठितानि मनीषिभि: । तावन्ति हरिनामानि कीर्तितानि न संशय. ॥ ' इति च । परमात्मा गोविन्द: स्वयमेवाह — 'वेदैश्च सर्वै: अहमेव वेद्य: ' इति (गीता १५-१५)। अकारवाच्य: स एव विष्णु: प्रणववाच्य । प्रणवस्यापि अकारस्यैव अवधातो: निष्पन्नत्वात् । 'अवते: टिलोपश्च ' इति पाणिनिसूत्रेण (उणा-१) मन्प्रत्ययस्य टिलोप, 'मोऽनुस्वार. ' इति पाणिनिसूत्रेण (८-३-२३) अनुस्वारतया परिणामश्च । अत: एकाक्षरत्वम् । तस्यैव प्रणवस्य विस्तारो वेद: । तद्वत्, अकारवाच्यस्य प्रणव-

वाच्यस्य परमात्मनो विस्तार अखिल एवाय प्रपञ्च । 'विस्तार. सर्वभूतस्य विष्णो सर्वमिदं जगत्' इति पराशर. । वेदस्य यथा अकारविस्तारत्वं तथा प्रपञ्चस्यापि सर्वभूतस्य विष्णो विस्तारत्वमिति अकारवाच्यस्य सर्वशरीरित्वतत्त्वविस्तार. । 'लीङ् श्लेषणे' इति दिवादि-धातुः, 'पचि विस्तारवचने,' इति चुरादिधातु । 'प्रपञ्च.' इति ब्रह्मण. स्वशरीरभूतजगत विस्तार, 'प्रलय' इति ब्रह्मण स्वशरीर-भूतजगत सङ्कोच. । आनुशासनिकोऽयं विस्तर । अयमेव च गोविन्दविस्तार. । 'गवादिषु विन्दे संज्ञाया' इति एतत्सूत्रे 'गाति' अपि सहपठित. । वाऽगरूपन्यायेन क्विपि 'गात,' स तु परमात्मैवेति संप्रतिपन्न । सात्वन्तश्च भगवन्तं प्रपन्ना । 'विश्वगुप्तये, सख उदे-यिवान्सात्वता कुले' इति आत्वान शुको गायति । विश्वगोप्तृत्व-निरूपित गात् गोविन्द इति सहपाठस्वारस्यमत्रापि द्रष्टव्यम् । यथा-लक्षणं खलु शब्दो लक्ष्यते । शब्दाख्यस्य वेदस्य सर्वशरीरी सर्वरक्षक एव मुख्यलक्ष्य: तस्यैव तथा मुख्यलक्ष्यतया सिद्धत्वात । 'यद्वेदादौ स्वर: प्रोक्त: वेदान्ते च प्रतिष्ठित. । तस्य प्रकृतिलीनस्य य: पर: स महेश्वर.' इति तैत्तिरीयोपनिषत् । 'अ इति ब्रह्म' 'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभि. व्यज्यमाना बह्वी नानारूपा भवति' इति अकारस्य अक्षरान्तरप्रकृतिभूतत्वं श्रुति प्रदर्शयति । तथाभूत: अकार: भगवद्वाचक इति उपनिषत् । परं ब्रह्म भगवान् स्वयमेवाह 'अक्षराणा-मकारोऽस्मि' इति (गीता-१०-३३) । 'परं ब्रह्म परंधाम पवित्रं परमं भवान् । .... असितो देवलो व्यास: स्वयं चैव ब्रवीषि मे ॥' इति (गीता १०—१२, १३) व्यासोक्तं परं ब्रह्म गीतोपदेष्टा वासुदेव इति निश्चीयते । आद्यावन्ते च हरिनाम्ना सहैव प्रणव: पठ्यते ।

लीङ्प्रयोगात् सर्वशरीरिभूतहरिपरत्वं प्रणवस्य अकारस्य चेति स्वरसतया प्रतीयते । 'अग्निर्देवानामवमः विष्णु. परमः' इति होतार. अधीयते । 'अग्निरवमो देवताना विष्णु. परमः' इत्यध्वर्यव: । अकारप्रकारभूतानामज्झलात्मकाना सर्वेषामक्षराणा तत्प्रकृतिभूते अकारे अविभक्तस्वस्वरूपवर्णतया अतिसूक्ष्मदशापन्नत्वं उपनिषदुक्तप्रकृतिलीनत्वाख्यलयः । तथैव सर्ववाच्यप्रकृतिभूते स्वस्मिन् स्वप्रकारभूतचिदचिदाख्यजगत. परित्यक्तनामरूपतया अतिसूक्ष्मदशापन्नत्वं प्रलय इति प्रलयप्रपञ्चतादशार्हाज्झलाख्यस्वेतरसमस्ताक्षरशरीरक अकार. प्रलयप्रपञ्चतादशार्हचिदचिदाख्यजगच्छरीरकस्य परमात्मनः वाचक. इति औपनिषदोऽयमर्थ अनुशासनानुगृहीत: । यथा परं ब्रह्म सर्वजगच्छरीरि तथा शब्दब्रह्मापि सर्वाक्षरशरीरि । उभयोरपि ब्रह्मणो. अभिन्ननिमित्तोपादानत्वं लक्षणम् । अकारवाच्यस्य चिदचिदाख्यसर्ववाच्यशरीरकत्वं अकारस्य अज्झलाख्यसर्वाक्षरशरीरकत्वं च इत्यवसीयते । सर्वशरीरिण एव उच्छ्वासनिश्वासा: । तस्यैव निश्वासभूतं शब्दब्रह्म । अत: सर्ववाच्यप्रकृतिभूतस्य परब्रह्मण. सर्ववाचक प्रकृतिभूतेन अकारेण वाच्यतया संबन्ध. औत्पत्तिक एव, न प्रायिकः न वा कृत्रिम: नाप्यौपचारिक. । शरीर्येव प्राणिति प्राणनादेव शरीरीति शरीरिनिश्वासयो. अपृथक्सिद्धतया संबन्धः स्वत: सिद्ध । शब्दानुशासनबलेन नामरूपव्याकरणवैभवेन सृष्टिवाक्यगतिसामान्यन्यायेन च उक्तार्थ: समञ्जसं सङ्घटते । ईश्वरत्वं नाम विश्वात्मतया सर्वनियामकत्वम् । 'स्थेशभासपिसकसोवरच्' इति पाणिनिसूत्रम् (३-२-१७६) । 'ईश ऐश्वर्ये' इति धातो: वरच्प्रत्यये ईश्वरशब्दो निष्पन्न: । 'अशू-व्याप्तौ' इति व्यापनार्थकस्य अश्नोतेर्धातो: वरच् प्रत्यये, 'ईशोपधा-

या:' इति पाणिनिसूत्रेन (उणा—५) अकारस्थाने ईकारे वरच् प्रत्यये च निष्पन्न: ईश्वरशब्द: सर्वव्यापित्ववाची । 'अश्नोतेराशुकर्मणि वरट्च' इति च पाणिनिसूत्रम् (उणा—५)। एवंतया निरुपाधिकसर्वशरीरित्वं निरुपाधिकसर्वान्तर्यन्तृत्वं च सर्वेश्वरत्वम् । तच्च सर्वेश्वरत्वं नारायणत्वमिति त्रयाणामपि भाष्यकाराणामभिमतम् । तथा च गीतायां — 'मामनुस्मरन् (८—१३) इत्यत्र 'माम् ईश्वरम्' इति, 'मां स्मरति' (८—१४) इत्यत्र 'मां परमेश्वरम्' इति । ये तु धर्म्यामृतमिदं .... भक्तास्तेऽतीव मे प्रिया:' (१२—२०) इत्यत्र यस्मात् धर्म्यामृतमिदं यथोक्तमनुतिष्ठन् भगवत: विष्णो: परमेश्वरस्य अतीव प्रियो भवति' इति, 'अहं सर्वस्य प्रभव:' (१०—८) इत्यत्र 'अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगत: प्रभव: उत्पत्ति:' इति । 'द्वाविमौ पुरुषौ लोके' (१५-१६) इत्यत्र 'ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप: उक्त:' इति । गीताभाष्यारम्भे 'नारायण: परोऽव्यक्तादण्डमव्यक्तसंभवम् । अण्डस्यान्तस्त्विमे लोका: सप्तद्वीपा च मेदिनी ।। स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षु ... जगत: स्थितिं परिपिपालयिषु: स आदिकर्ता नारायणाख्यो विष्णु:' इति, 'अनन्याश्चिन्तयन्तो मां' (९—२२) 'ये चान्यदेवताभक्ता:' (९-२३) 'अहं हि सर्वयज्ञानां' (९-२४) 'यान्ति देवव्रता देवान्' (९-२५) इत्यादिषु 'अनन्या: अपृथग्भूता: परं देवं नारायणम् आत्मत्वेन गता: सन्त: चिन्तयन्त: मां ये जना: सन्यासिन: पर्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां, योगक्षेमं योग अप्राप्तस्य प्रापणं, क्षेमं तद्रक्षणं तदुभयं वहामि प्रापयामि अहम्, 'ज्ञानीत्वात्मैव मे मतम्' 'स च मम प्रिय:' यस्मात् तस्मात् ते मम

आत्मभूता' प्रियाश्च इति। ननु अन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान्, सत्यं वहत्येव, किंतु अयं विशेषः — अन्ये ये भक्ता' ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते ; नहि ते जीविते मरणे वा आत्मनो गृधिं कुर्वन्ति, केवलमेव भगवच्छरणास्ते, अत. भगवानेव तेषां योगक्षेमं वहति इति । ननु अन्या अपि देवताः त्वमेवचेत् तद्भक्ताश्च त्वामेव भजन्ते, सत्यमेवं— येऽपि अन्यदेवताभक्ता अन्यासु देवतासु भक्ताः अन्यदेवताभक्ता. सन्तः यजन्ते पूजयन्ति श्रद्धया आस्तिक्यबुद्ध्या अन्विता अनुगता' तेऽपि मामेव कौन्तय! यजन्ति अविधिपूर्वकम् अविधि. अज्ञानं तत्पूर्वकं यजन्ते इत्यर्थ. । कस्मात् ते अविधिपूर्वकं यजन्ते इति? उच्यते—यस्मात् अहं हि सर्वयज्ञाना श्रौताना स्मार्ता-नां च सर्वेषां यज्ञाना देवतात्वेन भोक्ता च प्रभु एव च । मत्स्वामिको हि यज्ञ, 'अधियज्ञोऽहमेवात्र' इति हि उक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्च अविधिपूर्वकम् इष्ट्वा यागफलात् च्यवन्ति प्रच्यवन्ते। येऽपि अन्यदेवताभक्तिमत्त्वेन अविधिपूर्वकं यजन्ते तेषामपि यागफलम् अवश्यंभावि। कथम्? यान्ति गच्छन्ति देवव्रताः देवेषु व्रतं नियम भक्तिश्च येषा ते देवव्रता. देवान् यान्ति । पितॄन् अग्निष्वात्तादीन् यान्ति पितृव्रताः। श्राद्धादिक्रियापरा. पितृभक्ता । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या. भूताना पूजका' । यान्ति मद्याजिनः मद्यजनशीला. वैष्णवाः मामेव यान्ति । समाने अपि आयासे मामेव न भजन्ते अज्ञानात्, तेन ते अल्पफल-भाजो भवन्ति इत्यर्थ.' इति, 'वेदैश्च सर्वै. अहमेव वेद्य.' (१५-१५) इत्यत्र 'वेदैश्च सर्वै' अहमेव परमात्मा वेद्य' इत्यादिकं तत्त्वोपायपुरुपार्थनिर्णायकशङ्करभाष्यम् । भगवद्वासुदेवपरत्वम्, आत्म-

वता सता केवलमेव भगवच्छरणत्वं च मतत्रयपरमाचार्याणां परमहृदयम्। अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थ:, तदतिरेकि नानाविध-ज्ञातृज्ञेयतत्कृतज्ञानभेदादिसर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् इति निर्विशेषाद्वैतसिद्धान्त शङ्करस्य । अशेषचिदचित्प्रकारं ब्रह्म एकमेव तत्त्वं, तत्र प्रकारप्रकारिणो. प्रकाराणा च मिथोऽत्यन्तभेदेऽपि विशिष्टै-क्यादिविवक्षया एकत्वव्यपदेश तदितरनिषेधश्च इति विशिष्टाद्वैतसिद्धा-न्त रामानुजस्य। अभेदश्रुतीनाम् औपचारिकत्वात् जगद्ब्रह्मणो आत्य-न्तिकपारमार्थिकभेदावष्टब्ध द्वैतसिद्धान्त आनन्दतीर्थस्य। तद्विषये तेषा मिथो भेद:। यद्यपि तत्र भिन्ना: तथापि भगवदेकचरणत्वे अहमहमिकया तेषा परमप्रवृत्ति यदि, सिद्धमेव स्वतोभगवत्पारम्यं, भगवच्चरणैकान्तिनां सता विश्वातिशायिमहनीयत्व च। अत एव ते तत्तत्सिद्धान्तनिष्ठै. भगव-त्पादा इति सोपचारं निर्दिश्यन्ते । अतो विश्वात्मनो भगवतो वासुदेवस्य सर्वशब्दवाच्यत्वं सर्वजगत्कारणत्वं सर्वकर्मसमाराध्यत्वं चेति वैदिक. सिद्धान्त । 'ध्रुवमेकाक्षरं ब्रह्म ओमित्येव व्यवस्थितम्। बृहत्त्वाद्बृंहणत्वा-च्च तद्ब्रह्मेत्यभिधीयते ॥ प्रणवावस्थितं नित्यं भूर्भुवस्स्वरितीर्यते । ऋग्यजुस्सामथर्वाणं यत्तस्मै ब्रह्मणे नम.। . परमब्रह्मणे तस्मै नित्यमेव नमो नम । यद्रूपं वासुदेवस्य परमात्मस्वरूपिण: । स ऋङ्मय साममय सर्वात्मा स यजुर्मय । ऋग्यजुस्सामसारात्मा स एवात्मा शरीरिणाम्' इति विष्णुपुराणे (३.३–३०)। 'प्रणवात्मकं शब्दब्रह्म प्रणमति 'ध्रुवम्' इत्यादिद्वयेन । यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्म इति श्रुते:। बृहत्त्वबृंहणत्वे उपपादयति प्रणवस्य कारणावस्थायाम् अन्तर्गतव्याहृत्यादिकत्वेन बृहत्त्वं, कार्या-वस्थाया व्याहृतिवेदरूपेण परिणामात बृंहणत्वमिति भाव:। अथ

प्रणवं भगवद्रूपवत्त्वेन स्तुवन् प्रणमति 'परमब्रह्मणे' इति । परब्रह्मत्वं च वासुदेवरूपत्वात् ।—अकाराद्यवयवरूपेण त्रिधाभिन्नं अवयविरूपेण च अभिन्नं, एतत्प्रणवरूपं ब्रह्म स प्रभुः वासुदेव तद्रूपत्वात् तद्वाचकत्वाच्च स च सर्वभूतेष्वात्मतया अवस्थितोऽपि अभेद एक प्रभुत्वादकलुषश्च स्वाधिष्ठिताभि भिन्नाभि. मूर्तिभि एव भिद्यते । भगवत सर्वात्मत्वं निगमयति ' इत्यत्र (विशिष्टाद्वैत) विष्णुचित्तीयव्याख्या । ' वेदादीना प्रकृतिभूतम् ओमित्येकाक्षरं ब्रह्म पूर्वं व्यवस्थितम् अविनाशितया स्थिरं, तस्य ब्रह्मसमाख्याया हेतुमाह बृहत्वात् अपरिच्छिन्नत्वात् बृंहणत्वात् इति वेदाना कारणत्वाच्च, तदोङ्काराक्षरं ब्रह्मेत्यभिधीयते । यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परंब्रह्मेति श्रुते । तदेवं प्रधानरूपेण प्रणम्य तदाश्रयेश्वररूपेण प्रणमति 'परमब्रह्मणे' इत्यादिभि । परमब्रह्मणे इति तस्मै परमात्मने ब्रह्मणे नम । तस्य परब्रह्मत्वे हेतुमाह 'यद्रूपम्' इति । 'तस्या शिखाया मध्ये परमात्मा व्यवस्थित' 'ओमिति ब्रह्म ' इत्यादिश्रुते । परमात्मस्वरूपिणो वासुदेवस्य रूपमित्येतत् स्पष्टयति 'एतदि' ति । यत्प्रणवाख्यं ब्रह्म एकाक्षरत्वेन अभेदमपि भूरादिव्याहृतित्रयेण त्रिधा भिद्यते इति त्रिधा भेदम् । तदेतत्स प्रभु ईश्वरो वासुदेव एव । सहि सर्वभूतेष्वपि अभेद भेदशून्य. भिन्नाभि बुद्धिभि भिद्यते' इत्यत्र (अद्वैत) श्रीधरीयव्याख्या । शब्दब्रह्मण इव परब्रह्मणश्च बृहत्त्वबृंहणत्वविशिष्टत्वं 'प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर । बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् । तस्मै नमस्ते सर्वात्मन् ' इति विष्णुपुराणे प्रपञ्चितम् । इत्थं सर्ववेदप्रतिपाद्य प्रणवप्रतिपाद्य अकारवाच्य: सर्वान्तर्यामी भगवान् वासुदेव इति तैत्तिरीयहृदयं सर्वसंप्रतिपन्न-

तया निरधारि । उपबृंहितं च भगवतः सर्वशरीरित्वं प्रणवप्रतिपाद्यत्वं च । 'तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् । तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् । शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो । त्वमनादिः अनिर्देश्य त्वामहं शरणं गतः ।' 'त्वमोङ्कारः परंतप.', 'जगत्सर्वं शरीरं ते', इति रामायणे । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः । नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः', 'त्वमोङ्कारः प्रजापतिः' 'यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् । सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः ।' 'परमेशस्य तद्विष्णोः परमं पदम्' इति विष्णुपुराणे । 'सोऽभिध्याय शरीरात्स्वात् सिसृक्षुः विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत् ।' 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ।' 'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ।' इति मानवस्मृतौ । परब्रह्मस्वरूपनिरूपणार्थम् इदंपरत्वैव वृत्त्या प्रवृत्तस्य बादरायणसूत्रस्य शारीरकमित्यभिधानं कृतम् । 'एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकश्शारीर आत्मा । अत एव इदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमिति अभियुक्तैः (बोधायनादिभिः) अभिधीयते' इति आनन्दमयाधिकरणश्रीभाष्यनिष्कर्षः । अत्र वस्तुशब्दप्रयोगः सम्यगुपपद्यते । 'वसेः तुन्' इति पाणिनिसूत्रम् (उणा—१) । 'वासुदेव इति तत्र भगवतः संज्ञा' इति पतञ्जलिमहाभाष्यम् । सर्वशरीरित्वं वासुदेवत्वमिति 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते । तद्ब्रह्म परमं नित्यम्' इति

पराशर. । परमात्मशरीरभूतत्वादेव वस्तुत्वमिति वस्तुतत्त्वम् । 'नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' इति पराशर । अत अकारवाच्यत्वं सर्वरक्षकस्य सर्वशरीरिण इति तैत्तिरीयरस ।

तथा अथर्वशिखाया प्रणवमधिकृत्य अकारादिवर्णत्रयस्य देवता-विशेषानधीत्य 'यावसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या' इति पठ्यते । नादात्मिका चतुर्थ्यर्धमात्रा पुरुषदैवत्येति निर्णीयते । 'प्राणान् सर्वान् परमात्मनि प्रणामयतीति एतस्मात् प्रणवः चतुर्धावस्थित इति' इति प्रणव निरुच्यते । अवसाने यः पुरुषशब्देन बोध्यते स एव निर्वचने परमात्मशब्देन व्यपदिश्यते । कोऽयं पुरुष. परमात्मा य. अर्धमात्रात्मकनादेन बोध्यते ? भगवान् वासुदेव सर्व-शरीरी सर्वान्तर्यामी इति ब्रूम । कुत एतत् ? योगात्प्रयोगाच्च । 'पुर अग्रगमने' इति धातो, 'पॄ पालनपूरणयो' इति धातोश्च पुरुषशब्दो निष्पन्न । 'पुरु सनोति इति पुरुष', 'पुरि (देहे) शेते इति पुरुष.', इति च निर्वचनम् । सर्वनायक. सर्वनियामक सर्वपालक. सर्वपूरक सर्वशरीरी इति स एव पुरुष । 'परम पुरुषं दिव्यम्' (८–८) ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' (८-१३) 'अव्यक्तोऽक्षर इत्युक्त. तमाहु परमा गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम।' (८–२१), 'पुरुष. स पर पार्थ भक्त्या लभ्यस्त्वनन्यया । यस्यान्त-स्स्थानि भूतानि येन सर्वमिदं ततम् ।' (८-२२), 'मा च योऽव्यभि-चारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ।' (१४-२६), 'तमेवाद्य पुरुषं प्रपद्ये' (१५-४), 'न तद्भास-यते सूर्यः न शशाङ्को न पावक । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।' (१५-६), 'ममैवाशो जीवलोके जीवभूतस्सनातनः' ।

(१५-७), 'उत्तम. पुरुषस्त्वन्य परमात्मेत्युदाहृत । यो लोकत्रय-मावित्य बिभर्त्यव्यय ईश्वर. ।' 'यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तम । अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम ' (१५-१७, १८), 'ईश्वर सर्वभूताना हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।' (१८-७१) इत्यादिगीतोपदिष्टं प्रणवबोधितं परमपुरुषनिरतिशयपालकपूरकनायकमुक्तिदमुक्तभोग्यत्वादिकं द्रष्टव्यम् । अत्रत्या शङ्करभाष्यपङ्क्तय. — 'परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भव . '(८.८), 'ओमिति एकाक्षरं ब्रह्म ब्रह्मण. अभिधानभूतम् ओङ्कारं,व्याहरन्,उच्चारयन्न तदर्थभूतं माम् ईश्वरम् अनुस्मरन' (८-१३), 'अनन्यचेता योगी सततं सर्वदा य. मा परमेश्वरं स्मरति नित्यश अत अनन्यचेता. सन् मयि सदा समाहित भवेत्' (८-१४), 'माम् उपेत्य ईश्वरम् उपेत्य मद्भावम् आपद्य पुनर्जन्म पुनरुत्पत्ति न आप्नुवन्ति न प्राप्नुवन्ति ये पुन. मा न प्राप्नुवन्ति ते पुन आवर्तन्ते ' (८ १५), 'पुरुष पुरि शयनात् पूर्णत्वाद्वा, स पर. पार्थ!, पर. निरतिशय', यस्मात् पुरुषात् न परं किञ्चित्' (८-२२), 'तत· पश्चात् यत्पदं वैष्णव तत्परिमार्गितव्यं, परिमार्गणम् अन्वेषणम्, ज्ञातव्यमित्यर्थ । (१५-३); 'आद्यं पुरुषं प्रपद्ये इत्येव परिमार्गितव्यं तच्छरणतया इत्यर्थ. । (१५-४), 'यच्च सूर्यादि: न भासयते तत धाम परमं विष्णो मम पदं यत गत्वा न निवर्तन्ते इत्युक्तम् ' (१५-५), 'कथमुच्यते तद्धाम गताना नास्ति निवृत्ति. इति ? शृणु तत्र कारणम्—ममैव परमात्मनो नारायणस्य अंश: भाग· अवयव एकदेश ' (१५-७), 'उत्तम. उत्कृष्टतम· पुरुषस्तु अन्य अत्यन्तविलक्षण. आख्या परमात्मा इति परमश्चासौ देहाद्य-

विद्याकृतात्मभ्य., आत्मा च सर्वभूतानां प्रत्यक्चेतन इति अत परमात्मा इति उदाहृत· उक्त वेदान्तेषु । स च विशिष्यते —— य. लोकत्रयं भूर्भुवस्स्वराख्यं स्वकीयया बलशक्त्या प्रविश्य आविश्य बिभर्ति, स्वरूपसद्भावमात्रेण बिभर्ति धारयति अव्यय· न अस्य व्यय विद्यते इति अव्यय·,क.? ईश्वर. सर्वज्ञ. नारायणाख्य. ईशनशील.' (१५-१७), 'यथाव्याख्यातस्य ईश्वरस्य, पुरुषोत्तम ' इति एतन्नाम प्रसिद्धम् । तस्य नामनिर्वचनप्रसिद्ध्या अर्थवत्त्वं नाम्नो दर्शयन 'निरतिशय अहम् ईश्वर:, इति आत्मानं दर्शयति भगवान्' (१५-१८), 'ईश्वर· ईशनशील· सर्वभूताना सर्वप्राणिनां हृद्देशे हृदयदेशे तिष्ठति स्थिति लभते' (१८—७१) इति । तथा ब्रह्मसूत्रे च शङ्करभाष्यम् —— 'स एतस्माज्जीवघनात् परात्परं पुरिशय पुरुषमीक्षते' इति । परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एव चेह परमपुरुषशब्दाभ्यामभिध्यातव्य· प्रत्यभिज्ञायते। . तस्मात (जीवघनात्) परो य. परमात्मा ईक्षणकर्मभूत· स एवाभिध्यानेऽपि कर्मभूत इति गम्यते । परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते । परो हि पुरुप परमात्मैव भवति यस्मात परं किञ्चिन्नास्ति, 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति ' इति च श्रुत्यन्तरात्' इति ईक्षतिकर्माधिकरणे, 'परस्यैवेदं ब्रह्मण: पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते, ब्रह्मशब्दस्य तस्मिन् मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन संबन्ध: उपलब्ध्यधिष्ठानत्वात् । स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुष ीक्षते' 'स वा अय पुरुष. सर्वासु पूर्षु पुरिशय ' इत्यादि श्रुतिभ्य: । अथवा जीवपुर एवास्मिन् ब्रह्म सन्निहितमुपलक्ष्यते । यथा सालग्रामे विष्णु: सन्निहित. इति तद्वत् स च उक्तेभ्य· हे-

तुभ्य परमेश्वर.' इति, ' .. एवं धृतेश्च हेतो: परमेश्वर एवायं दहर:' इति, अपि चेदृग्रूपत्वं प्राज्ञस्यैवात्मन. स्मर्यते भगवद्गीतासु— 'न तद्भासयते सूर्यो न शशाङ्को न पावक । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।' इति ।, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।' इति च' इति दहराधिकरणे; 'तैश्च इन्द्रियादिभिर्म्यतै संसारमधिगच्छति । संयतैस्त्वध्वन. पारं तद्विष्णो: परमं पदमाप्नोतीति दर्शयित्वा, किं तदध्वन: पारं विष्णो. परमं पदम् इत्यस्यामाकाङ्क्षायां, तेभ्य एव प्रकृतेभ्य. इन्द्रियादिभ्य. परत्वेन परमात्मानम् अध्वन. पारं विष्णो: परमं पदं दर्शयति — 'इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च परं मन. । मनसस्तु परा बुद्धि. बुद्धेरात्मा महान्पर । महत परमव्यक्तमव्यक्तात् पुरुष. पर । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति: ।' इति तथा च 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यतेत्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि ।' इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति—'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति । एतदुक्तं भवति—वाचं मनसि संयच्छेत् महान्तं तु आत्मान शान्त आत्मनि प्रकरणवति परस्मिन् पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति च । तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य- प्रधानस्यावकाश. । 'तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते । अस्माकं तु रथरूपककल्प्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यम्' इति च आनुमानिकाधिकरणे ।

अथर्वशिखोपदिष्टनादतत्त्वविषये वक्तव्याशा कविनैव गीताभाष्य- तात्पर्यचन्द्रिकायां (गीता ८ - १३) प्रपञ्चिता इति नात्र ते अनूद्यन्ते ।

प्रणवप्रतिपाद्यपरतत्त्वविषये तत्तत्सिद्धान्तिना मतभेदाः सन्तीत्युक्त्वा तान्यपि मतानि यथोपपन्नं समीकुर्वन् स्वाभिमतं तेषामप्यादरणीय-रमणीयतया क्रोडीकरोति । तत्रत्येयं पङ्क्तिः — " . अत्र अर्ध-मात्राधिदैवतभूतः पुरुष एव अवतीर्णात्रस्थ द्वितीयमात्रादैवत्वेन विष्णुरिति चोक्तः । तथा 'ओमिति ब्रह्म ओमितीदं सर्वम्" इति, 'ओङ्कारमेवेदं सर्वम्' इति । तथा 'हृदिस्था देवतास्सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतःशिरो दक्षिणतः पादो य उत्तरस्स ओङ्कारो य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी यस्सर्वव्यापी सोऽनन्तः योऽनन्तः तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म' इति । अत्र प्रकरणादिवशात् प्रतर्दनविद्यावदन्तरितं शार्सनमनुसन्धेयम् । — महाभारते च महेश्वरवचनम् 'ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्' इति । आह च भगवान् याज्ञवल्क्यः — 'देवतायाः परायाश्च ह्यालम्बः प्रणवः स्मृतः । कश्चिदाराधनाकामो विष्णोः भक्त्या करोति वै । .. श्रद्धा-भक्त्यादराद्यैश्च तस्य देवः प्रसीदति । ओङ्कारेण तथा चात्मा ह्युपास्ते स प्रसीदति । ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् । ... एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ।' . . पुनश्चात्र हैरण्यगर्भादिसिद्धान्तेषु प्रणवार्थं प्रपञ्च्यान्तेऽप्याह — 'त्रिरात्मा त्रिस्वभावश्च तथा त्रिव्यूह एव च । पञ्चरात्रे तथा ह्येष भगवद्वाचकः स्मृतः । ... त्रिव्यूह इति निर्दिष्टः ओङ्कारो विष्णुरव्ययः । भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा । व्यक्ताव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा ।' इति । यच्चात्र हैरण्यगर्भकापिलावान्तरतपस्सनत्कुमारब्राह्मिष्ठपाशुपताख्येषु

सिद्धान्तेषु अर्थभेदवर्णनं, तदपि तत्तदर्थविशेषान्तरितपरमपुरुषपर्य-वसानमभिप्रेत्येति मन्तव्यम् ” इति ।

तथा च श्रुति भगवान् महर्षयश्च । ‘अङ्गान्यन्या देवता ’ ‘अन्तरा अन्या देवता ’ इति श्रुतिः । ‘यो यो या या तनुं भक्त ’ (गीता ७–२१) इति भगवान् । ‘अहं ते हृदयं राम ’ इति भगवान् चतुर्मुखो रामायणे । उत्तरश्रीरामायणे पुनश्चाह स एव भगवान् चतुर्मुख. ‘रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् । ततस्त्वमसि दुर्धर्ष. तस्माद्भावात् सनातनात् । रक्षार्थं सर्वभूताना विष्णुत्वमुपजग्मि-वान्’ इति । ‘क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवा तवाङ्गे संभूतौ तस्मात्केशवनामवान्’ इति भगवान् शङ्करो हरिवंशे । ‘स हि नारायणो ज्ञेय सर्वात्मा पुरुषो हि स.’ इति भारते शान्तिपर्वणि । ‘नमो हिरण्यगर्भाय हरये शङ्कराय च । वासुदेवाय ताराय सर्गस्थित्य-न्तकारिणे’ । इति विष्णुपुराणे अथर्वशिखाहृदयं व्याख्यातं भवति । प्रणवे प्रथममात्रा चतुर्मुखदैवत्या, द्वितीयमात्रा अवतीर्णावस्थविष्णुदैव-त्या, तृतीयमात्रा रुद्रदैवत्या, या अवसाने अर्धमात्रा नादात्मिका सा परमपुरुषाख्यवासुदेवदैवत्येति पराशरहृदयम् । द्वितीयाक्षरस्य नादस्य च देवतायाः ‘विद्युमती ’ त्वविशिष्टत्वात् एकत्वं सम्यक्प्रतिपत्तुं शक्य-मिति हृदयम् । एवमेव पादुकात्मा श्रीशठकोपः प्रणवार्थं द्रमिडोपनिष-च्छिखोज्ज्वलतया प्रकाशयामास । आदावन्ते च द्रमिडोपनिषदः अथर्व-शिखागीतप्रणवज्योतिर्मयत्वमिति द्रष्टव्यम् । पद्धतिरियं तस्य विस्तारः । श्रीरङ्ग शेषपीठं प्रणवाकारं चेति पादुकागर्भाश्मनादाना प्रणवप्रतिपाद्य-परमपुरुषत्वबोधकत्वं परमरमणीयम् इति अथर्वशिखोज्ज्वलेयं पद्धतिरिति विज्ञेया ।

कठवल्ली च 'सर्वे वेदा यत्पदमामनन्ति' इति प्रणवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्राप्तु. प्रत्यगात्मन स्वरूपमुक्त्वा प्राप्यस्य परस्य ब्रह्मण: स्वरूपमुपदिश्य उपायभूतस्य उपासनस्य भक्तिरूपतां प्रदर्श्य उपासनप्रकारम् उपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय 'अशब्दमस्पर्शम्' इत्यादिना उपसञ्जहार । एवमन्या अप्युपनिषद ।

इत्थं शासनभूतान् लक्ष्यान् अनुशासनभूतान् लक्षणाच्च निरुपाधिकसर्वरक्षकस्य अकारवाच्यस्य प्रणववाच्यस्य च सर्वशरीरिण सर्वशरण्यस्य पुरुषोत्तमस्य नादावसाननिलयत्वं सिद्धम्। सा च सिद्धि: तत्पादे सुतरामिति चेत् तत्पादरक्षाया कैमुतिकमिति कविचमत्कार. । सर्वशेषिण भगवच्चरणस्यापि त्राणतया चरणैकशेषभूतपादुकया व्याप्यत्वं पादुकाया व्यापकत्वं च पश्यन् तदन्तर्मणिरवपरमानन्दमनुभवति कवि । कथमिदमुपपद्यते इति चेदुच्यते । लोके तावत् पादुकाया: व्यापकत्वं पादस्य च व्याप्यत्वं प्रत्यक्षसिद्धम् । अस्तु नाम लोकप्रसिद्धि: । 'एतद्वै महोपनिषदं देवाना गुह्यम' इत्युपनिषदधीतं परमरहस्यं परमरस्यं च परमं तत्त्वमिदमेव । तत्त्वपरमनाद. पद्धतिनाद: । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्युपनिषदुदारनाद. । पादुकाया. गति: 'कामचारो भवति' 'अनुसञ्चरन्' 'येन येन धाता गच्छति तेन तेन सहगच्छति तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरम्' 'पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धन. । स्वातन्त्र्यमतुलं लब्ध्वा तेनैव सह मोदते ।' 'अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्याद्युक्तप्रकृष्टशेषत्वमहत्तमा । सा हि परा गति । स्वाधीनपादगतिर्हि पादुकागति: । रामायणमिति रामपादुकाया: संज्ञेति रामायणपरमार्थ. । 'अयनं वर्त्म मार्गाध्व पन्थान: पदवी सृति:' इत्यमर: । अत एव

णत्वमिति दिक् । रसो वै सः इति परमात्मनो रसिकत्वं सिद्धवत्कृत्य देवी श्रुतिः कीर्तयति । शरण्यस्य अन्नं प्रपन्नः, प्रपन्नस्य अन्नं शरण्यः, शरण्यप्रपन्नौ अन्योन्याङ्गभावमापन्नौ सर्वान् कामान् सदैव सहैव च अश्नुवाते इत्युपनिषत्परमहृदयम् । 'अहमन्नमहमन्नमहमन्नम्' 'अहमन्नादः' इत्युपनिषद्गीतिः । "अहमन्नाद इतीव गायति त्वग्" इति नादपद्धतिगीतिः । सैव भगवद्गीता । प्रपन्नानां परमप्राप्यतया आत्मानम् आत्मनश्च अवाप्तसमस्तकामस्य परमोदारस्य दयाधनस्य परमरसिकस्य परमप्राप्यतया प्रपन्नांश्च आत्मनस्तु कामायैव परमात्मा स्वयमेव गायति । 'भक्त्या त्वनन्यया लभ्यः' इति प्रपन्नपरमलाभतया आत्मानं, 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इति आत्मनः परमलाभतया प्रपन्नांश्च भगवान् बोधयति । भोगमात्रे परमसाम्यं बादरायणः सूत्रयति । 'न च परमपुरुषः सत्यसङ्कल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति, यः एवमाह — 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानीत्वात्मैव मे मतम् । आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।' इति' इति श्रीभाष्यरसः । प्रपन्नशरण्ययोः मिथोदर्शनवैभवं दिव्यचक्षुः वाल्मीकिः ददर्श । 'निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् । उटजे राममासीनं जटामण्डलधारिणम् ।' इति शरण्यलाभे दीक्षितः प्रपन्नो भरतः शरण्यं श्रीरामभद्रं ददर्श । 'जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि । ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा' । इति प्रपन्नलाभे दीक्षितः सर्वलोकशरण्यः श्रीरामभद्रः प्रपन्नं भरतं

ददर्श । प्रपन्नः शरण्यं यथाकथञ्चित् ददर्श, शरण्यस्तु प्रपन्नं दुर्दर्श-मित्येव ददर्श इति शरण्यदर्शनस्य परमौदार्यम् । तदेव प्रपन्नपराधीन-स्य शरण्यस्य परमत्वम् । भक्तिपरः प्रपन्नः दयापरः शरण्यः । दय-नीये दयाविधातत्वं परमात्मत्वमिति परमात्मा श्रीरामभद्रः स्वदया-परत्वं प्राचीकशत् । कस्य परत्वं गरीयः, शेषत्वानन्त्यविशिष्टस्य प्रपन्नस्य, शेषित्वानन्त्यविशिष्टस्य शरण्यस्य वा इति प्रपन्नशरण्याभ्यां सहक्रियमाणा आनन्दमीमांसा । एषैव श्रीशठकोपेन द्रमिडोपनिषदि महाश्रीमदन्तादौ च सह ब्रह्मणा सादरमभ्यस्तानन्दमीमांसा । सैवात्र मीमांसा श्रीरङ्गनाथस्य अतीव हृदयङ्गमनादतरङ्गायमाणतया पद्धत्या-मस्यां सानन्दं शतधा ध्वन्यत इति पद्धतिरमणीयध्वनिः । सर्वश्रुति-रमणीयः पादुकागर्भमणिनादः भगवच्छेषतानादः, स्थिरचराणि सर्वाण्यपि भगवच्छेषतां ध्वनयन्ति, तत्सर्वनादनिदानभूतः पादुकागर्भमणिनादः तन्नादानुनादः त्रिजगन्नादः समुन्मीलितशुद्धश्रुतिशष्कुलीनां प्रशान्त-चित्तानां सताम् आस्वाद्यतमः इति सर्वत्र पद्धतिध्वनिः ।

स्थूलत्वं सूक्ष्मत्वं, नादत्वं बिन्दुत्वं अन्यत्सर्वं च तद्विषयकं रहस्यम् अस्यां पद्धत्याम् अन्यासु च प्रकाशितमिति तत्रैव तत्तत्तत्त्वं द्रष्टव्यम् । केचिदेव श्लोका अत्र उदाह्रियन्ते —

आस्थाय तत्र स्फुटबिन्दुनादं स्तम्बेरमं तादृशसन्निवेशम् ।
अदर्शयस्त्वं पुरमध्यभागे पादावनि! त्वत्प्रणवाश्रयत्वम् ॥ (१३७)

अन्तर्न्यस्तैः मणिभिरुदितं पादुके ! रङ्गबन्धो
मन्दं मन्दं निहितचरणे मञ्जुलं त निनादम् ।

पश्यन्त्यादिक्रमपरिणतेः प्राक्तनीं ता पराया:
मन्ये मित्रावरुणविषयादुच्चरन्तीमत्रस्थाम् ।। (४००)

स्वदते मणिपादुके ! त्वदीया पदशाखायुगयन्त्रिका विचित्रा ।
परमं पुरुषं प्रकाशयन्ती प्रणवस्येव परेयमर्धमात्रा ।। (८०४)

इत्यादय. ।

१५ **रत्नसामान्यपद्धत्यां**—पूर्वपद्धत्याम् अन्तर्मणिरवात्मकः नादो वर्णितः । अन्तर्मणिरवश्रवणेन पादुकाया. सञ्जातरोमाञ्चिताकृतित्व-मुत्प्रेक्ष्य तदेव पादुकावयवप्रत्युप्तरत्नसामान्यतया अस्या पद्धत्या वर्ण्यते । अर्धमात्रात्मकनादत्वात् अन्तर्मणिरवत्वं, व्यक्तवर्णत्वात् बहिर्मणित्वं चेति सरसो भावः । ज्ञानविकासविशेषत्वात् पादुकाबहिर्मणय. न प्राकृतमणिसजातीयाः परं तु विलक्षणा इति हृदयम् । व्यक्त-वर्णतया मणित्वमुत्प्रेक्ष्य मणिसामान्यमाश्रित्य पादुका वर्ण्यते इति पद्धतिरचनारमणीयत्वम् ।

१६ **बहुरत्नपद्धत्यां** — विशिष्य, व्यक्ताना नानावर्णानां यौगपद्यं व्यवस्थितत्वं चेति रत्नबहुत्वसौष्ठवमाश्रित्य पादुकां वर्णयन्ति । व्यक्त-वर्णव्यवस्थितेः जगत्स्रष्टुः परब्रह्मणः सादृश्यं पादुकाया पश्यन् यथा-दृष्टं तुल्यालङ्कारेण पादुका स्तूयते ।

१७ **पद्मरागपद्धत्यां** — पद्मरागिणी पादुका श्रीरङ्गनाथपदैक-नियता अपरा पद्मवासा इति तादृशवैभवमालम्ब्य पादुकाश्री. वर्ण्यते ।

१८ **मुक्तापद्धत्यां** — बद्धानां मुक्तानाम् ईश्वरस्य च, शेषशेषित्वं यत्र प्रत्यक्षं भाति सा पादुका मम सिद्ध्यतु इति पद्धतिमवतारयति ।

मुक्तामणिरश्मिनिर्झरे विभूतिद्वयमपि अदैवमातृका भवतीति जगत्समृद्धि-हेतुभूता सत्त्वोत्तरावदातमङ्गला पादुका प्रशस्यते ।

१९ **मरतकपद्धत्यां** — हरित्त्वप्रकाशकनया मरतकगुणमालम्ब्य पादुका कीर्त्यते ।

२० **इन्द्रनीलपद्धत्यां** — निजहरिनीलमयूखैः स्वाश्रितानां हरिणा सह अयत्नलभ्यलावण्यमापादयन्ती उदारचरिता पादुका गीयते ।

२१ **बिम्बप्रतिबिम्बपद्धत्यां** — मणिमयपादुकाया भगवत्पर्यन्त-सर्ववस्तुप्रतिफलनयोग्यत्वं प्रतिफलनेन सौभाग्यावहत्वं च पादुकाया वर्ण्यते ।

२२ **काञ्चनपद्धत्यां** — विलक्षणकाञ्चनमयी पादुका वर्ण्यते । 'आप्रणखात्सर्व एव सुवर्ण.' इति श्रुतिः । 'पादुके हेमभूषिते' इति वाल्मीकिः । प्राकृतकाञ्चने विरक्ति जनयित्री काञ्चन (सौवर्ण, अद्वि-तीय) पादुकां कल्याणप्रकृतिं वन्दे इति तृणीकृतकनकभूरिकल्याणः विरक्तिमूर्तिः भगवच्छरणः कविः पादुकादिव्यकाञ्चनमयूखैः तृणमपि कनकं पश्यन् पादुकायाः अप्राकृतसुवर्णवैभवं निखिलजगन्मङ्गलावहत्वं च वर्णयति ।

२३ **शेषपद्धत्यां** — शेषस्य मूर्त्यन्तरत्वेन पादुका कीर्त्यते । पादुकामूर्तित्वेन शेषत्वपूर्तित्वमिति कीर्तनम् । पादुकायाः शेषवेषान्तरत्वे 'नेतरोऽनुपपत्ते' इति नीति उपपत्तिः, सरोयोगिसूक्तिः यामुनमुनि-सूक्तिः अन्याश्च उपलब्धि. ।

२४ **द्वन्द्वपद्धत्यां** — प्रणवकलाद्वयरूपपादुकाद्वयमिति तद्गततादृग्द्वन्द्वत्वमालम्ब्य पादुका वर्ण्यते । 'द्वन्द्वः सामासिकस्य च' इति भगवानाह । स च अद्वन्द्वपादुकाद्वन्द्व. इति रस. सामासिक. । 'जगन्निदानमद्वन्द्वं द्वन्द्वं वन्दामहे महः' इति दिव्यमिथुनं लक्ष्मीनारायणाख्यमधिकृत्य भट्टपराशरः । उभयपदार्थप्रधानत्वेन द्वन्द्वस्य उत्कर्षः इति रामानुजगीताभाष्यरसः (गीता—१०.३३) ।

२५ **सन्निवेशपद्धत्यां** — शेषतोत्कर्षत्वात् सर्वशेषिणो विष्णोः अणोः अणीयसी महतो महीयसी तत्पदेनैव सम्मिता इति तादृशसन्निवेशमाश्रित्य पादुका स्तूयते ।

२६ **यन्त्रिकापद्धत्यां** — भगवच्चरणाङ्गुल्यवलम्बनार्थां यन्त्रिकामाश्रित्य पादुका वर्ण्यते ।

२७ **रेखापद्धत्यां** — पादुकागताः रेखाभेदाः श्रुतिसूचकाः इति तद्रेखाणाम् अलेखनीयसौन्दर्यमाश्रित्य पादुकां वर्णयति ।

२८ **सुभाषितपद्धत्यां**—पादुकामाश्रित्य समञ्जसनीतिबोधक सुभाषितश्लोकान् निबध्नाति ।

२९ **प्रकीर्णपद्धत्यां** — प्रधानैकार्थमनवलम्ब्य पद्धत्यन्तरेषु वर्णितान् भावान् समासतः मालीकृत्य पादुका वर्ण्यते ।

३० **चित्रपद्धत्यां** — विचित्रजगदाधारो विष्णुः यस्या प्रतिष्ठितः तां सर्वचित्रप्रतिष्ठाभूता पादुका चित्रबन्धेन वर्णयति । 'दुर्योजत्वादिक्लेशरहितम्' 'अनुन्मृदितपरमाश्चर्यम्' इति कवे चित्रसौष्ठवं दीक्षित-

सार्वभौमेन यादवाभ्युदयव्याख्याने (६.१०८) प्रशंसितम् । अति-दुष्करचित्रबन्धान् अतिमनोज्ञान् अत्रापि पद्धत्या निबध्नाति । वाच्यं चित्रं तस्माद्वाचकमपि चित्रम् इति वाच्यवाचकयो चित्रतया आनु-रूप्यं स्वाभाविकम । अत चित्रस्य स्वाभाविकत्वम आवश्यकं च । अर्थचित्रवत् शब्दचित्रमपि महाकाव्याङ्गतया कल्पते । सचित्रस्यैव काव्यस्य पूर्णत्वमिति कविसमय । अर्थालङ्कारा यथा उपमादय तथा शब्दालङ्कारा यमकादय. इति प्राञ्च । तथा च महाकवि· कालिदास रघुवंशे नवम सर्गे यमकचित्रं प्रणिबबन्ध । माघादिमहाकवय· 'विषम सर्वतोभद्रचक्रगोमूत्रिकादिभि· । श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥' इति सर्वतोभद्रगोमूत्रिकादिकाव्यबलविन्या सरूपबहुविधचित्राणि व्यरी-रचन् । अतो महाकविसम्प्रदायसिद्धा चित्रग्रन्थरचना । यादवाभ्युदये चित्रसर्ग षष्ठ. शताधिकश्लोकात्मकश्च । अत्र सहस्रे चित्रपद्धति: त्रिंशी चत्वारिंशच्छ्लोकात्मिका च । अतिदुष्करमहायमका अतिरमणीय-गोमूत्रिकासर्वतोभद्रादिचित्रबन्धा. अन्ये च अरचितचरा चक्रबन्धाश्च विन्यस्यन्ते । अस्य महाकवे· चित्रविन्यासा· महाकवीना माघभारवि-प्रभृतीना सुन्दरविन्यासेभ्योऽपि सुन्दरतरा. चित्ररसिकाना हृदयङ्गमा. । अस्य कवे. गोमूत्रिकामेका सर्वतोभद्रमेकं च अत्र निदर्शयाम —

देवस्थानमिवेन्धानं परायणमवारितम् ।
गोवर्धनमवेक्षेत नारायणमिवागतम् ॥ इति यादवाभ्युदये ६-६४

सुरासुरार्चिता धन्या तुङ्गमङ्गलपालिका ।
चराचरार्चिता मान्या रङ्गपुङ्गवपादुका ॥ इति पादुकासहस्रे च ९१२

अस्य कवे गोमूत्रिकाबन्ध: ।

प्रवृत्ते विकसद्धूवानं साधनेऽप्यविषादिभि. ।
ववृषे विकसद्दानं युधमाप्य विषाणिभि । इति शिशुपालवधे माघस्य गोमूत्रिकाबन्धः (१९–४६)

नासुरोऽयं न वा नागो धरसंस्थो न राक्षसः ।
नासुरोऽयं न वा भोगो धरणिस्थो हि राजस. ।। इति किरातार्जुनीये भारवे. गोमूत्रिकाबन्ध. । (१५-१२)

तथा – मायाभासा साभायामा यासूताया यातासूया ।
भातायाया यायाताभा सायायागे गेयायासा ।। इति यादवाभ्युदये (६-९९)

जयामपा पामयाज्ञ यामहेदुंदुहे मया ।
महेशका काशहेम पादुकामम कादुपा।।इति पादुकासहस्रे च ९३२ अस्य कवे· सर्वतोभद्रबन्ध. ।

सकारना नारकास कायसाददसायका ।
रसाहवावाहसार नादवाददवादना ।। इति शिशुपालवधे माघस्य सर्वतोभद्रबन्धः (१९-२६)

देवाकानिनिकावादे वाहिकास्वस्वकाहिवा ।
काकारेभभरेकाका निस्वभव्यव्यभस्वनि ।। इति किरातार्जुनीये भारवेः सर्वतोभद्रबन्धः । (१५-२५)

एतत्पादुकासहस्रमहाकाव्योपज्ञं पादुकाचित्राख्यं पादुकायुगलगर्भकर्णिकमष्टदलपद्मम् । अकृतचरविचित्रचित्रबन्धरचनाकौशलमत्र पद्धत्या प्रकाशते ।

३१ **निर्वेदपद्धत्याम्** — अध्वनः पारभूततया उपनिषदुद्घोषितस्य भगवत्पदस्य परित्राणतया विराजमानाया. पादुकायाः स्वरूपरूपगुण-विभवैश्वर्यादीन्यनुभूय तत्तादृशसर्वशरण्यताकारसुलभोदारशुभालम्बने सादरं सन्निहितेऽपि अतीतमेतावन्तं कालम् आलम्बनान्तरभ्रान्तिजनित-स्वापराधं सानुशयं विनिवेद्य श्रीपादुकानिरुपाधिकदयैकालम्बः 'श्रीमद्रङ्गेश्वरचरणयोः अन्तरङ्गैः प्रयुक्तं सेवाह्वानं सपदि शृणुया पादुकासेवकेति' इति निजमनोरथमुद्घोषयन् हार्दैः पद्यगुम्भैः पादुकां प्रसादयति ।

३२ **अथ फलपद्धत्याम्** — उपायफलयोः काष्ठा पादुका इति परमप्राप्यतया पादुका यथाश्रुतं यथाहृदयमुपवर्ण्यते । 'जयन्ति भुवि सन्तः' इति माङ्गलिक. परमोदार., देशिकसार्वभौम· सता मङ्गलमाशासानः परं ब्रह्म श्रीरङ्गनायकमाह्लादयामास इति काव्यार्थसंक्षेपः ।

एतादृशसर्वमाङ्गलिकमहार्थाः सर्वश्रुतिरसायनतया सर्वचित्तरञ्जकतया च अतिललितमनोज्ञमहाकाव्यात्मना चारुतरं विन्यस्यन्ते । 'इत्थं विचिन्त्याः सर्वत्र भावास्सन्ति पदे पदे । कवितार्किकसिंहस्य काव्येषु ललितेष्वपि ।' इति यादवाभ्युदयव्याख्याने (१-९) दीक्षितसार्वभौमानुभवः । तद्वदस्मिन् काव्ये च सुन्दरसंस्कृतश्रुतिशष्कुलीवलयितव्योमावगाही गुण. जागर्तीति महान्तः पश्यन्तु । "विजृम्भन्ते नूनं मधुमथनपादावनि ! मम द्रवीभूतद्राक्षामधुरिमधुरीणा. फणितय " इति निरवग्रहपादुकानुग्रहं कविरनुभवति । 'जिह्वाग्रे मधुमत्तमा' इत्यौपनिषदमाशासनम् । काव्यस्यास्य औपनिषदरसभूयिष्ठत्वं रसिकानां हृदयमेव जानातीति सहृदया सन्त एवात्र प्रमाणम् । अतिहृद्यपद्यगुम्भैः पठता गायता च स्वरूपबोधकत्वं, शान्ति क्षान्ति विनय विरक्ति औदार्यत्याग निर्मत्सरत्व-

अनुकम्पा सौहार्दाद्यात्मगुणपोषकत्व चेत्यादिकं काव्यपठनगानश्रवण-परमफलम् । सर्वजनाना शाश्वतिकमङ्गलाय एष प्रबन्ध एतादृशप्रबन्धाश्च परं प्रभवन्तीति लोकोत्तरमहाकाव्यस्यास्य यथावदवगाहस्य प्रयोजनम् ।

## कविचरितम्

"नास्ति पित्रार्जित किञ्चित् न मया किञ्चिदार्जितम् । अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥" इति कविनैव वर्णितं कविचरितम । 'यदीयचरितं सता सुचरितव्यवस्थापकम्' इति सप्ततिरत्नमालिकाकार. । कवे: जन्मभूमि काञ्ची निवासभूमि श्रीरङ्गम । हिमवन्नलसेतुमध्यभूतेयं पुण्यभूमि चतुर्दशविद्यास्थाननिवासस्थानस्य अस्य कवे विद्याविहारभूमि । निरुपाधिकरक्षक सर्वशरण्यो भगवान वासुदेव परं तत्त्वं, स एव श्रुतिशिर प्रसिद्धसिद्धोपाय, तस्य च वशीकरणं तच्छरणागतिरेव, सर्वान्तरात्मभूतस्य भगवत तस्याप्यन्तरात्मतया भगवतैव व्यपदिष्टाना तदीयाना भागवताना सता च कैङ्कर्यमेव चेतनाना स्वरूपानुरूपपरमपुरुषार्थ, निष्पन्नपरिशुद्धात्मस्वरूपाणा स्वनिष्ठाभिज्ञानमहनीयाना भगवद्भागवतकिङ्करत्वाधिराज्याभिषिक्ताना बद्ध श्रीपादुकामकुटाना मुक्तमूर्तीना सतामावास वैकुण्ठकल्प इति लीलाविभूति नित्यविभूतितुल्ययोगक्षेमतया परिणमयन वेदान्तदेशिक इत्यन्वर्थनामा वेदोक्तनिरामयशतायुस्सम्पन्न विभूतिमिमामनुजग्राह । अशेषवर्णार्हपरमोपायभूतशरणागति दयापरोऽयं महदेशिक: अदिशत उपादिशच्च । वेदान्तभूतं परमं फलं भगवत्पादुका इति भगवत्पादुकाप्राप्ति भगवत्पादुकापरमसाम्यप्राप्ति च परमपुरुषार्थतया प्रकाशयामास । अत. खल्वयं देशिक: वेदान्तदेशिक । पादुकाशेषत्वकाष्ठामातिष्ठन

"कर्मावलम्बका. केचित् केचित् ज्ञानावलम्बका. । वयं तु हरिदासाना पादरक्षावलम्बका. ॥" इति प्रकाशितनिजस्वरूप विज्ञानघनो वेदान्तविद्यामूर्ति विरराज । 'मैत्री समस्तभूतेपु ब्राह्मणस्योत्तमं धनम्' इति पराशरोक्ते लक्ष्यभूतोऽयं सर्वभूतमैत्रीमय. महादेशिक दयापर इत्येव परमात्मन परत्वं ददर्श। दयाया. भगवत्कल्याणगुणसार्वभौमत्वं भगवतो दयाधीनत्वं च दयाशतके प्रपञ्चयामास । सर्वेषा नामरूपव्याकर्ता भगवान्। दीनाना रक्षणार्थमवतितीर्षो तस्यैव भगवत नामरूपव्याकर्त्री दया इति दयाशतकरस । 'तदैक्षत' 'सोऽकामयत' 'अनुप्रविश्य नामरूपेव्याकरोत्' इत्युपनिषदधीतभगवत्कर्तृकनामरूपव्याकरणम्। "प्रसूय विविविधं जगत तदभिवृद्धये त्वं दये !, समीक्षणविचिन्तनप्रभृतिभि स्वयं तादृशै । विचित्रगुणचित्रितां विविधदोषवैदेशिकी वृपाचलपते· तनुं विशसि मत्स्यकूर्मादिकाम्॥" इति दयाशतके वेदान्तदेशिकस्यास्य नामरूपव्याकरणवैभवम् । अध्यात्मविद्यानिधि परमकारुणिक अनन्तगुणशेवधि निर्वर्तितवर्णाश्रमधर्मानुगृहीतपरमानन्दप्रपन्नधर्मपरायण इति कवे विश्वमान्यमहागुणमहिष्ठत्वम् । विश्वत परमोदारचरित' कविरिति भूयसा पूर्वं प्रपञ्चित इति नात्र विशिष्य प्रस्तूयते । अस्य कवे अवतार. कलौ 4370 तमे विभवनामसंवत्सरे कन्यामासे श्रवणनक्षत्रे, अवतारसमापनं च कलौ 4471 तमे सौम्यनामसंवत्सरे वृश्चिकमासे कृत्तिकानक्षत्रे, इति । क्रैस्तवाब्दे A D 1268—1369

## कवेः प्रबन्धाः

'परश्शतं वापि परस्सहस्रं श्रीवेङ्कटाचार्यकृता प्रबन्धा ।
तत्रालमेक खलु भुक्तिमुक्त्यो. कात्स्न्येन करतान् गणयेत् समस्तान् ॥'

इति सप्ततिरत्नमालिकाकार । संस्कृतभाषायां, द्रमिडभाषाया, प्राकृतभाषायां च कविकृतप्रबन्धा. बहव: उपलभ्यन्ते । लुप्ताश्च बहव: । केचिदशन: केचिदत्यन्तं च लुप्ता: । उपलभ्यमाना अत्र परिगण्यन्ते—

**संस्कृतभाषायां** — ईशावास्योपनिषद्भाष्यम्, अधिकरणसारावली, तत्त्वमुक्ताकलाप:, सर्वार्थसिद्धि:, तत्त्वटीका, शतदूषणी, सेश्वरमीमांसा, मीमांसापादुका, न्यायपरिशुद्धि: न्यायसिद्धाञ्जनम्, गीताभाष्यतात्पर्यचन्द्रिका, गीतार्थसंग्रहरक्षा, पाञ्चरात्ररक्षा, सच्चरित्ररक्षा, निक्षेपरक्षा, यामुनाचार्यश्रीचतुश्लोकीस्तोत्ररत्नरामानुजगद्यत्रयभाष्यरूपरहस्यरक्षा, द्रमिडोपनिषत्तात्पर्यरत्नावली, द्रमिडोपनिषत्सार: इत्यादिवेदान्तशास्त्रप्रकाशनपाञ्चरात्रप्रपञ्चनद्रमिडोपनिषत्सारार्थसंग्रहरूपपद्यगद्यात्मका: उद्ग्रन्था: । यादवाभ्युदय: पादुकासहस्रम् हंससन्देश. संकल्पसूर्योदय: (नाटकं) सुभाषितनीवी इत्यादिकाव्यप्रबन्धा. ।

हयग्रीवस्तोत्रं गोपालविंशति: देहलीशस्तुति: देवनायकपञ्चाशत् वरदराजपञ्चाशत् यथोक्तकारिस्तोत्रम् कामासिकाष्टकम् अष्टभुजाष्टकम् परमार्थस्तुति: भगवद्ध्यानसोपानम् दशावतारस्तोत्रम् अभितिस्तव: श्रीस्तुति:, भूस्तुति:, गोदास्तुति:, सुदर्शनाष्टकम्, षोटशायुधस्तोत्रम्, गरुडदण्डक:, गरुडपञ्चाशत्, रघुवीरगद्यम्, यतिराजसप्तति:, दयाशतकम्, इत्यादिस्तोत्रप्रबन्धा. ।

शरणागतिदीपिका, न्यासतिलक:, न्यासविंशति: (सव्याख्या), न्यासदशकम्, इत्यादिशरणागतियाथात्म्यबोधकस्तोत्रप्रबन्धा. ।

**द्रामिडभाषायाम्**- 'देशिकप्रबन्ध' ' इत्यभिधीयमान:समाहृत: पद्यात्मक-

प्रबन्धः । समाहृताश्च—अमृतरञ्जनी, अधिकारसङ्ग्रहः,अमृतास्वादिनी, परमपदसोपानम्, परमतभङ्ग, हस्तिगिरिमाहात्म्यम्, प्रपत्तिदशकम् (अडैक्कलप्पत्तु), अर्थपञ्चकम्, वैष्णवदिनचरी, चिह्न (तिरुचिन्न) माला, द्वादशनाम, मूलमन्त्रसङ्ग्रहः, द्वयमन्त्रसङ्ग्रहः चरमश्लोकसङ्ग्रहः, गीतार्थसङ्ग्रहः, मणित्रयग्रन्थ. (मुम्मणिक्कोवै), नवमणिमाला, प्रबन्धसारः, आहारनियमः इत्यादिपद्यप्रबन्धाः ।

"**मणिप्रवाल**" इति व्यपदिष्टसंस्कृतद्रामिडसंश्लिष्टसन्दर्भाः—संप्रदायपरिशुद्धि, रहस्यत्रयसार., (द्वात्रिंशदधिकारात्मकम् उत्कृष्टतममित्यभ्यर्हितमन्त्रत्रयार्थप्रकाशकरहस्यग्रन्थरत्नम्) तत्त्वपदवी, रहस्यपदवी, तत्त्वनवनीतम्, रहस्यनवनीतम्, तत्त्वमातृका,रहस्यमातृका, तत्त्वसंदेश., रहस्यसंदेश., रहस्यसंदेशविवरणम्, तत्त्वरत्नावली, तत्त्वरत्नावलीसङ्ग्रह.,रहस्यरत्नावली, रहस्यरत्नावलीहृदयम्, तत्त्वत्रयचुलक., रहस्यत्रयचुलक, अभयप्रदानसार, अञ्जलिवैभवम्, रहस्यशिखामणि, प्रधानशतकम्, उपकारसंग्रह, मुनिवाहनभोग., परमपदसोपानम्, परमतभङ्गः, हस्तिगिरिमाहात्म्यम्, सारसारः, विरोधपरिहारः, इत्यादिगद्यप्रबन्धाः ।

अन्येऽपि केचित् कविकृता इति परिगण्यन्ते । ते नाम —— शिल्पार्थसार (शिल्पशास्त्रविषयः), रसभूमामृतम्, वृक्षभूमामृतम् (वैद्यकग्रन्थौ), भूगोलनिर्णयः (श्लोकरूप. सव्याख्य.)इत्यादयः । यज्ञोपवीतप्रतिष्ठा, हरिदिनतिलकः, वैश्वदेवकारिका, इत्यादयोऽपि कवेः इति केचित् ।

**प्राकृतभाषायां** —— अच्युतशतकम् ।

संस्कृतप्रबन्धेषु लुप्तांशाःसेश्वरमीमांसाया तत्त्वटीकायां च बहवः,

शतदूषणीन्यायसिद्धाञ्जनादिषु केचन भागाः। अधिकरणदर्पणः समग्रमेव लुप्तः। तथा द्रामिडप्रबन्धेषु कन्तुकादिपञ्चशुद्धद्रामिडप्रबन्धाः। 'तिरुमुडि अडैवु' इत्यादिका अन्ये च समग्रमेव लुप्ताः । ' निगमपरिमलः ' इति श्रीशठकोपस्य द्रमिडोपनिषदः 'मणिप्रवाल' रूपव्याख्यानप्रबन्धश्च समग्रमेव लुप्तः । 'मधुरकविहृदये' च पद्यमेकमेवावशिष्यते, अन्यत् सर्वं लुप्तमभूत् । अलं लुप्तगणनेन । अवशिष्टा एव 'परश्शतं वापि परस्सहस्रम्' इति विराजन्ते इति जगन्मङ्गलविपुलवाग्विलासः कवेः विजयते । स च विजयः भगवत्पादुकाविजयः । स च विजयः पादुका-सहस्रविजयः इति विजयपरंपरा ।

## पादुकासहस्रव्याख्यानम्

अस्य काव्यस्य संस्कृतभाषाया द्रमिडभाषायां च व्याख्यानानि सन्ति । यादवाभ्युदयव्याख्यात्रा दीक्षितसार्वभौमेन पादुकासहस्रमपि व्याख्यातमिति त्यागराजविजयग्रन्थादवगम्यते । तत्तु नोपलभ्यते । उपलभ्यमानेषु श्रीनिवाससूरिविरचिता परीक्षाख्यव्याख्या उत्कृष्टतमा । 'नामूलं लिख्यते किञ्चित् नानपेक्षितमुच्यते' इति शिशुपालवधे मल्लिनाथस्य प्रतिज्ञा । तादृशी रीतिः व्याख्यातुरस्यापीति व्याख्यानस्य अतिसमीचीनत्वरमणीयत्वादयः । इति सर्वमतिशोभनम् ।

निखिलभुवनयोगक्षेमभूमावहान्त-
र्मणिरवसुभगाम्नायान्तसीमन्तभूषा ।
जयति परमशब्दब्रह्मसाहस्रपद्यो-
द्धृतवकुलधराङ्घ्रिश्रीधरालोकलक्ष्मीः ॥
गद्यपद्यात्मकोऽयं श्रीकेशवेन समीरितः ।
रङ्गेशपादुकालक्ष्मीविजयो जयताद्भुवि ॥

श्री ॥

श्रीरङ्गनाथदिव्यमणिपादुकाभ्या नम ॥

# श्रीपादुकासहस्रम्

श्रीमते शठकोपाय नम ॥

श्रीमते रामानुजाय नम ॥

श्रीमते निगमान्तमहादेशिकाय नम ॥

श्रीमान् वेङ्कटनाथार्य कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्ता सदा हृदि ॥

## आद्या प्रस्तावपद्धतिः ॥

1 सन्तश्श्रीरङ्गपृथ्वीशचरणत्राणशेखराः ।
जयन्ति भुवनत्राणपदपङ्कजरेणवः ॥ १

2 भरताय परं नमोऽस्तु तस्मै
प्रथमोदाहरणाय भक्तिभाजाम् ।
यदुपज्ञमशेषतः पृथिव्यां
प्रथितो राघवपादुकाप्रभावः ॥ २

3 वर्णस्तोमैर्वकुलसुमनोवासनामुद्वहन्ती-
माम्नायानां प्रकृतिमपरां संहितां दृष्टवन्तम् ।
पादे नित्यप्रणिहितधियं पादुके! रङ्गभर्तु-
स्त्वन्नामानं मुनिमिह भजे त्वामहं स्तोतुकामः ॥ ३

4 दिव्यस्थानात् त्वमिव जगतीं पादुके! गाहमाना
पादन्यासं प्रथममनघा भारती यत्र चक्रे ।
योगक्षेमं सकलजगतां त्वय्यधीनं स जानन्
वाचं दिव्यां दिशतु वसुधाश्रोत्रजन्मा मुनिर्मे ॥ ४

5 नीचेऽपि हन्त मम मूर्धनि निर्विशेषं
तुङ्गेऽपि यन्निविशते निगमोत्तमाङ्गे ।
प्राचेतसप्रभृतिभिः प्रथमोपगीतं
स्तोष्यामि रङ्गपतिपादुकयोर्युगं तत् ॥ ५

6 धत्ते मुकुन्दमणिपादुकयोर्निवेशात्
वल्मीकसंभवगिरा समतां ममोक्तिः ।
गङ्गाप्रवाहपतितस्य कियानिव स्यात्
रथ्योदकस्य यमुनासलिलाद्विशेषः ॥ ६

7 विज्ञापयामि किमपि प्रतिपन्नभीतिः
प्रागेव रङ्गपतिविभ्रमपादुके! त्वाम् ।
व्यङ्क्तुं क्षमास्सदसती विगताभ्यसूयाः
सन्तस्स्पृशन्तु सदयैर्हृदयैस्स्तुतिं ते ॥ ७

8 अश्रद्दधानमपि नन्वधुना स्वकीये
स्तोत्रे नियोजयसि मां मणिपादुके! त्वम् ।
देव प्रमाणमिह रङ्गपतिस्तथात्वे
तस्यैव देवि पदपङ्कजयोर्यथा त्वम् ॥ ८

9 यदाधारं विश्वं गतिरपि च यस्तस्य परमा
तमप्येका धत्से दिशसि च गतिं तस्य रुचिराम् ।
कथं सा कंसारेर्द्रुहिणहरदुर्बोधमहिमा
कवीनां क्षुद्राणां त्वमसि मणिपादु! स्तुतिपदम् ॥ ९

10 श्रुतप्रज्ञासंपन्महितमहिमानः कति कति
स्तुवन्ति त्वां सन्तश्श्रुतिकुहरकण्डूहरगिरः ।
अहं त्वल्पस्तद्वद्यदिह बहु जल्पामि तदपि
त्वदायत्तं रङ्गक्षितिरमणपादावनि! विदुः ॥ १०

11 यदेष स्तौमि त्वां त्रियुगचरणत्रायिणि! ततो
महिम्नः का हानिस्तव मम तु संपन्निरवधिः ।
शुना लीढा कामं भवतु सुरसिन्धुर्भगवती
तदेषा किंभूता स तु सपदि सन्तापरहितः ॥ ११

12 मितप्रेक्षालाभक्षणपरिणमत्पञ्चषपदा
मदुक्तिस्त्वय्येषा महितकविसंरंभविषये ।
न कस्येयं हास्या हरिचरणधात्रि! क्षितितले
मुहुर्वात्याधूते मुखपवनविस्फूर्जितमिव ॥ १२

13 निस्सन्देहनिजापकर्षविषयोत्कर्षोऽपि हर्षोदय-
प्रत्यूढक्रमभक्तिवैभवभवद्वैयात्यवाचालितः ।
रङ्गाधीशपदत्रवर्णनकृतारम्भैर्निगुम्भैर्गिरां
नर्मास्वादिषु वेङ्कटेश्वरकविर्नासीरमासीदति ॥ १३

पतिरत्नपादु ! भवतीं तुष्टवतो मे जवात्
न्तां भवदीयशिञ्जितसुधासन्दोहसन्देहदाः ।
र्णितचन्द्रशेखरजटाजङ्गालगङ्गापय-
ादेर्शाविश्टङ्खलप्रसरणोत्सिक्ताः स्वयं सूक्तयः ॥ १४

ङसेतुमध्यभाजां
भ्यर्चितपादुकावतंसः ।
तधर्मतः कवीना-
21 केष्वस्मि मनोरथेष्ववाह्यः ॥ १५

22 यमस्य शब्दराशे
रङ्गधुरीणपादुके ! त्वाम् ।
नरभिष्टुवन्विमोहात्
हासेन विनोदयामि नाथम् ॥ १६

23 र्बहुविधाभिराश्रिता
टेश्वरकवेस्सरस्वती ।
ङ्गपतिरत्नपादुके !
कीव भवतीं निषेवताम् ॥ १७

24 करुणांबुधेस्तव खलु प्रसादादहं
ग्रातुमपि शक्नुयां शतसहस्रिकां संहिताम् ।
हरिपादुके ! तव गुणौघलेशस्थिते-
हतिरियं भवेदिति मितापि युक्ता स्तुतिः ॥ १८

19 अनुकृतनिजनादां सूक्तिमापादयन्ती
मनसि वचसि च त्वं सावधाना मम स्याः ।
निशामयति यथासौ निद्रया दूरमुक्तः
परिषदि सह लक्ष्म्या पादुके! रङ्गनाथः ॥ १९

20 त्वयि विहिता स्तुतिरेषा
पदरक्षिणि! भवति रङ्गनाथपदे ।
तदुपरि कृता सपर्या
नमतामिव नाकिनां शिरसि ॥ २०



इति

श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

प्रस्तावपद्धतिः प्रथमा ॥

श्री ॥

## द्वितीया समाख्यापद्धतिः ॥

---

21 वन्दे विष्णुपदासक्तं तमृषिं तां च पादुकाम् ।
यथार्था शठजित्संज्ञा मच्चित्तविजयाद्ययोः ॥ १

22 द्रमिडोपनिषन्निवेशशून्या-
नपि लक्ष्मीरमणाय रोचयिष्यन् ।
ध्रुवमाविशति स्म पादुकात्मा
शठकोपस्स्वयमेव माननीयः ॥ २

23 नियतं मणिपादुके! दधानः
स मुनिस्ते शठकोप इत्यभिख्याम् ।
त्वदुपाश्रितपादजातवंश-
प्रतिपत्त्यै परमाततान रूपम् ॥ ३

24 मुनिना मणिपादुके! त्वया च
प्रथिताऽयं शठकोपसंज्ञयैव ।
द्वितयं सकलोपजीव्यमासीत्
प्रथमेन श्रुतिरन्यतस्तदर्थः ॥ ४

25 आकर्ण्य कर्णामृतमात्मवन्तो
गाथासहस्रं शठकोपसूरेः ।
मञ्जुप्रणादां मणिपादुके ! त्वां
तदेकनामानमनुस्मरन्ति ॥ ५

26 यस्सप्तपर्वव्यवधानतुङ्गां
शेषत्वकाष्ठामभजन् मुरारेः ।
तस्यापि नामोद्वहनात् त्वयाऽसौ
लघूकृतोऽभूच्छठकोपसूरिः ॥ ६

27 शय्यात्मना मधुरिपोरसि शेषभूता
पादाश्रयेण च पुनर्द्विगुणीकृतं तत् ।
भूयोऽपि भागवतशेषतया तदेव
व्यङ्क्तुं पदावनि ! शठारिपदं बिभर्षि ॥ ७

28 पद्ये । देवि ! शठकोपमुनिस्तवासीत्
तस्यापि नामवहनान्मणिपादुके ! त्वम् ।
शेषीबभूव युवयोरपि शेषशायी
शेषं त्वशेषमपि शेषपदे स्थितं वः ॥ ८

29 विन्ध्यस्तम्भादविहतगतेर्विष्वगाचान्तसिन्धोः
कुम्भीसूनोरसुरकबलग्रासिनस्स्वैरभाषा ।
नित्यं जाता शठरिपुतनोर्निष्पतन्ती मुखात् ते
प्राचीनानां श्रुतिपरिषदां पादुके ! पूर्वगण्या ॥ ९

शठकोप इति समाख्या
तव रङ्गधुरीणपादुके! युक्ता ।
सूते सहस्रमेवं
सूक्तीस्स्वयमेव यन्मया भवती ॥ १०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**समाख्यापद्धतिः द्वितीया ॥**

श्री ॥

# तृतीया प्रभावपद्धतिः ॥

---

वन्दे तद्रङ्गनाथस्य मान्यं पादुकयोर्युगम् ।
उन्नतानामवनतिर्नतानां यत्र चोन्नतिः ॥ १

निश्शेषमम्बरतलं यदि पत्रिका स्यात्
सप्तार्णवी यदि समेत्य मषी भवित्री ।
वक्ता सहस्रवदनः पुरुषः स्वयं चेत्
लिख्येत रङ्गपतिपादुकयोः प्रभावः ॥ २

वेदोपबृंहणकुतूहलिना निबद्धे
विश्वम्भराश्रुतिभवेन महर्षिणा यत् ।
व्यासेन यच्च मधुसूदनपादरक्षे !
द्वे चक्षुषी त्वदनुभावमवेक्षितुं नः ॥ ३

प्रत्यक्षयन्ति परिशुद्धधियो यथावत्
रामायणे रघुपुरन्दरपादरक्षे ! ।
शश्वत्प्रपञ्चितमिदम्परयैव वृत्त्या
संक्षेपविस्तरदशासु तवानुभावम् ॥ ४

35 अल्पश्रुतैरपि जनैरनुमीयसे त्वं
रङ्गेशपादु ! नियतं निगमोपगीता ।
सारं तदर्थमुपबृंहयितुं प्रणीतं
रामायणं तव महिम्नि यतः प्रमाणम् ॥ ५

36 तिष्ठन्तु श्रुतयस्ततोऽपि महितं जागर्ति तत्पादुके !
तत्तादृक्प्रथनाय तावकगुणग्रामाय रामायणम् ।
यस्यासीदरविन्दसंभववधूमञ्जीरशिञ्जारव-
स्पर्धादुर्धरपादबद्धफणितिर्वल्मीकजन्मा कविः ॥ ६

37 भक्तिप्रह्वपुरप्रभञ्जनजटावाटीसनीडस्फुर-
त्कृ डारग्वधवासनापरिमलस्थाने स्तुमः पादुके ।
रङ्गक्षोणिभृदङ्घ्रिपद्मयुगलीपूर्णप्रपत्तेः फलं
निश्चिन्वन्ति विपश्चितश्शामघना नित्यं यदुत्तंसनम् ॥ ७

38 मातर्माधवपादुके ! तव गुणान् कस्स्तोतुमस्तोकधीः
कोटीरेषु यदर्पणप्रणयिनां सेवाक्षणे स्वर्गिणाम् ।
अन्योन्य क्षिपतामहम्प्रथमिकासम्मर्दकोलाहलं
विष्वक्सेनविहारवेत्रलतिकाकम्पश्चिराल्लुम्पति ॥ ८

39 योषिद्भूतदृषन्त्यपोढशकटस्थेमानि वैमानिक-
स्रोतस्विन्युपलम्भनानि भसितोदञ्चत्परिक्षिप्ति च ।
दूत्यादिष्वपि दुर्वचानि पदयोः कृत्यानि मत्वेव यत्
धत्ते तत्प्रणयं तदेव चरणत्राणं वृणे रङ्गिणः ॥ ९

40 वन्दे तन्मधुकैटभारिपदयोर्मित्रं पदत्रद्वयं
यत्तद्भक्तिभरानतेन शिरसा यत्र क्वचिद्बिभ्रति ।
द्वित्रब्रह्मविनाडिकावधिपदव्यत्यासशङ्काभर-
त्रासोत्कम्पदशाविसंस्थुलधृतिस्त्रैविष्टपानां गणः ॥ १०

41 पद्माकान्तपदान्तरङ्गविभवोद्रिक्तं पदत्रं भजे
यद्भक्त्या नमतां त्रिविष्टपसदां चूडापदेष्वर्पितम् ।
नित्यापीतनखेन्दुदीधितिसुधासन्दोहमुच्चैर्वम-
त्यन्तर्नूनममान्तमौक्तिककुलसच्छेपापटच्छद्मना ॥ ११

42 तद्विष्णोः परमं पदत्रयुगलं त्रय्यन्तपर्यन्तगं
चिन्तातीतविभूतिकं वितरतु श्रेयांसि भूयांसि नः ।
यद्विक्रान्तिदशासमुत्थितपदप्रस्यन्दिपाथस्विनी-
सख्येनेव सदानतस्य तनुते मौलौ स्थितिं शूलिनः ॥ १२

43 अम्बुन्यम्बुनिधेरनन्यगतिभिर्मीनैः कियद्गम्यते
क्लेशेनापि कियद्व्यलङ्घि रभसोत्तुङ्गैः प्लवङ्गेश्वरैः ।
विज्ञाता कियती पुनः क्षितिभृता मन्थेन गम्भीरता
किं तैः केशवपादुकागुणमहाम्भोधेस्तटस्था वयम् ॥ १३

44 पदकमलरजोभिर्वासिते रङ्गभर्तुः
परिचितनिगमान्ते पादुके धारयन्तः ।
अविदितपरिपाकं चन्द्रमुत्तंसयन्ते
परिणतभुवनं तत्पद्ममध्यासते वा ॥ १४

45 सकृदपि किल मूर्ध्ना शार्ङ्गिणः पादुके ! त्वां
मनुजमनुवहन्तं देहबन्धव्यपाये ।
उपचरति यथार्हं देववर्गस्त्वदीय-
स्स तु नियमितमृत्यो जोषमास्ते कृतान्तः ॥ १५

46 पदसरसिजमेतत् पादुके ! रङ्गभर्तुः
प्रतिनिधिपदवीं ते गाहते स्वेन भूम्ना ।
तदिदमपरथा चेत्तिष्ठतस्तस्य नित्यं
कथमिव विदितार्थास्त्वां भजन्ते महान्तः ॥ १६

47 श्रुतिशिरसि निगूढं कर्मणां चोदितानां
त्वदवधिविनिवेशं नाधिगन्तुं क्षमाणाम् ।
परिहसति मुरारेः पादुके ! बालिशानां
पशुवधपरिशेषान् पण्डितो नामयज्ञान् ॥ १७

48 जनयितुमलमर्घ्यं दैत्यजित्पादरक्षे !
नमति महति देवे नाकसिन्धोर्विशीर्णाः ।
मुहुरहिपतिचूडामौलिरत्नाभिघातात्
परिणतलघिमानः पाथसामूर्मयस्ते ॥ १८

49 पदसरसिजयोस्त्वं पादुके ! रङ्गभर्तुः
मनसि मुनिजनानां मौलिदेशे श्रुतीनाम् ।
वचसि च सुकवीनां वर्तसे नित्यमेका
तदिदमवगतं ते शाश्वतं वैश्वरूप्यम् ॥ १९

50 परिसरविनतानां मूर्ध्नि दुर्वर्णपङ्क्तिं
परिणमयसि शौरेः पादुके ! त्वं सुवर्णम् ।
कुहकजनविदूरे सत्पथे लब्धवृत्तेः
क्व नु खलु विदितस्ते कोऽप्यसौ धातुवादः ॥ २०

51 बलिमथनविहाराद्वर्धमानस्य विष्णो-
रखिलमतिपतद्भिर्विक्रमैरप्रमेयः ।
अवधिमनधिगच्छन् पापराशिर्मदीय-
स्समजनि पदरक्षे ! सावधिस्त्वन्महिम्ना ॥ २१

52 तटभुवि यमुनायास्तस्थुषी सन्निवेशात्
वहति निगमशाखावैभवं नीपशाखा ।
पदकमलमिदं तत्पादुके ! रङ्गभर्तु-
स्त्वयि भजति विभूतिं पश्य शाखानुशाखाम् ॥ २२

53 शिरसि विनिहितायां भक्तिनम्रे भवत्यां
सपदि तनुभृतस्तामुन्नतिं प्राप्नुवन्ति ।
मधुरिपुपदरक्षे ! यद्वशेनैव तेषा-
मनितरसुलभं तद्धाम हस्तापचेयम् ॥ २३

54 सकृदपि भुवनेऽस्मिन् शार्ङ्गिणः पादुके ! त्वा-
मुपनिषदनुकल्पैरुत्तमाङ्गैर्दधानाः ।
नरकमिव महान्तो नाकमुल्लङ्घयन्तः
परिषदि निविशन्ते प्राक्तनानां गुरूणाम् ॥ २४

55 शमदमगुणदान्तोदन्तवैदेशिकानां
शरणमशरणानां मादृशां माधवस्य ।
पदकमलमिदं ते पादुके! रक्ष्यमासी-
दनुदयनिधनानामागमानां निधानम् ॥ २५

56 परिचितपदपद्मां पादुके! रङ्गिणस्त्वां
त्रिभुवनमहनीयां सादरं धारयन्तः ।
निजशिरसि निलीनं देवि! मन्दारमाल्यं
निगमपरिमलैस्ते वासयन्तीव देवाः ॥ २६

57 कनकसरिदनूपे कल्पवृक्षस्य भूम्नः
पदकिसलयलग्ना पादुके! मञ्जरी त्वम् ।
परिणतिमधुराणां या फलानां सवित्री
वहसि निगमवृन्दैस्संपदं षट्पदानाम् ॥ २७

58 परिकलयसि चेन्मां पद्मवासानिषेव्ये
पदकमलयुगे त्वं पादुके! रङ्गभर्तुः ।
अविदितनिगमानां नूनमस्मादृशाना-
मघटितघटनी ते शक्तिराविष्कृता स्यात् ॥ २८

59 श्रुतिशतशिरश्चूडापीडे निपीडयितुं क्षमे
दुरितसरितामोघानेतानमोघविसर्पिणः ।
क्रमपरिणमद्वेधश्श्रेणीशिखामणिघट्टना-
मसृणिततले रङ्गक्षोणीभृतो मणिपादुके ॥ २९

60 जगज्जननरक्षणक्षपणसङ्गिनो रङ्गिणः
पवित्रतममाद्रिये भगवतः पदत्रद्वयम् ।
शिवत्वकरणक्षमत्रिदिवसिन्धुसंबन्धिनं
प्रधाव्य चरणं निजं प्रणिदधाति यत्र प्रभुः ॥ ३०

61 यदध्वरभुजां शिरः पदयुगं च रङ्गेशितु-
र्द्वयं घटयितुं क्षमं भवति शेषशेषित्वतः ।
शिरस्त्रमिदमस्तु मे दुरितसिन्धुमुष्टिन्धयं
कदध्वविहतिक्षमं किमपि तत्पदत्रद्वयम् ॥ ३१

62 समुत्क्षिपति चेतसि स्थिरनिवेशिना तावकी
मुकुन्दमणिपादुके! मुहुरुपासनावासना ।
उदर्कपरिकर्कशानुपरिपर्वणा खर्विता-
ननर्थशतगर्भितानमरशम्भलीविभ्रमान् ॥ ३२

63 विगाहन्ते रङ्गक्षितिपतिपदत्रायिणि! सकृ-
द्वहन्तस्त्वामन्तर्विनिहितकुचेलव्यतिकराः ।
मदोद्दामस्तम्बेरमकरटनिर्यन्मधुझरी-
परीवाहप्रेङ्खद्भ्रमरमुखरामङ्गणभुवम् ॥ ३३

64 अधिदैवतमापतत्सु कल्पे-
ष्वधिकारं भजतां पितामहानाम् ।
अभिरक्षतु रङ्गभर्तुरेषा
करुणा काचन पादुकामयी नः ॥ ३४

65 ध्रुवमिन्द्रियनागशृङ्खला वा
निरयद्वारनिवारणार्गला वा ।
अनपायपदाधिरोहिणी वा
मम रङ्गेशविहारपादुके ! त्वम् ॥ ३५

66 शरणागतसार्थवाहशीलां
श्रुतिसीमन्तपदप्रसाधनार्हाम् ।
अधिरङ्गमुपास्महे मुरारे-
र्महनीयां तपनीयपादुके ! त्वाम् ॥ ३६

67 इह ये भवतीं भजन्ति भक्त्या
कृतिनः केशवपादुके ! नियुक्ताः ।
कथयाम्ब ! तिरोहितं तृतीयं
नयनं त्रीणि मुखानि वा किमेषाम् ॥ ३७

68 मधुवैरिपरिग्रहेषु नित्यं
क्षमया त्वं मणिपादुके ! समेता ।
तदपि क्षमसे न किं परेषां
त्रिदशाधीश्वरशेखरे निवेशम् ॥ ३८

69 द्वितयं प्रतियन्ति रङ्गभर्तुः
कतिचित् काञ्चनपादुके ! शरण्यम् ।
अभयान्वितमग्रिमं करं वा
भवतीशेखरितं पदाम्बुजं वा ॥ ३९

70 भरताश्वसनेषु पादशब्दं
वसुधाश्रोत्रसमुद्भवो मुनीन्द्रः ।
पठति त्वयि पादुके! ततस्त्वं
नियतं राजपदादभिन्नभूमा ॥ ४०

71 मकुटेषु निविश्य दिक्पतीनां
पदमेव प्रतिपद्य दैत्यहन्तुः ।
परिरक्षसि पादुके! पदं त्वं
क्व नु भिद्येत गरीयसां प्रभावः ॥ ४१

72 जगतामभिरक्षणे त्रयाणा-
मधिकारं मणिपादुके! वहन्त्योः ।
युवयोः परिकर्मकोटिलग्नं
चरणद्वन्द्वमवैमि रङ्गभर्तुः ॥ ४२

73 पदरक्षिणि! वत्सला निकामं
रघुवीरस्य पदाम्बुजादपि त्वम् ।
यदसौ भरतस्त्वयांशवत्त्वा-
न्न पुनस्तादृशमन्वभूद्वियोगम् ॥ ४३

74 अभिगम्य मुकुन्दपादुके! त्वा-
मपनीतातपवारणैश्शिरोभिः ।
हरितां पतयो दुरापमन्यै-
रनघच्छायमवाप्नुवन्ति भोगम् ॥ ४४

75 अपहाय सितासितानुपाया-
नरविन्देक्षणपादुके! महान्तः ।
त्वदनन्यतया भजन्ति वृत्तिं
त्वदसाधारणभोगलाभिलाषाः ॥ ४५

76 प्रणमन्ति न वा विधेर्विपाका-
द्य इमे रङ्गनरेन्द्रपादुके! त्वाम् ।
उपजातमनुत्तमाङ्गमेषा-
मुभयेषामपि चित्रमुत्तमाङ्गम् ॥ ४६

77 तव केशवपादुके! प्रभावो
मम दुष्कर्म च नन्वनन्तसारे ।
नियमेन तथापि पश्चिमस्य
प्रथमेनैव पराभवं प्रतीमः ॥ ४७

78 अस्त्रभूषणतयैव केवलं
विश्वमेतदखिलं विभर्ति यः ।
अक्रमेन मणिपादुके! त्वया
सोऽपि शेखरतयैव धार्यते ॥ ४८

79 रामपादसहधर्मचारिणीं
पादुके! निखिलपातकच्छिदम् ।
त्वामशेषजगतामधीश्वरीं
भावयामि भरताधिदेवताम् ॥ ४९

80 चूडाकपालव्यतिषङ्गदोषं
विमोचयिष्यन्निव विष्णुपद्याः ।
कृतादरः केशवपादरक्षे !
बिभर्ति बालेन्दुविभूषणस्त्वाम् ॥ ५०

81 त्वयैव नित्यं मणिपादरक्षे !
राजन्वती सृष्टिरियं प्रजानाम् ।
स्त्रीराज्यदोषप्रशमाय नूनं
निर्दिश्यसे नाथविशेषणेन ॥ ५१

82 बिभर्षि नित्यं मणिपादुके ! त्वं
विश्वम्भरं धाम निजेन भूम्ना ।
तवानुभावश्चुलकीकृतोऽयं
भक्तैरजस्रं भवतीं दधानैः ॥ ५२

83 परस्य पुंसः पदसन्निकर्षे
तुल्याधिकारां मणिपादुके ! त्वाम् ।
उत्तंसयन्ति स्वयमुत्तमाङ्गै-
रशेषास्समं शेषगरुत्मदाद्याः ॥ ५३

84 मुकुन्दपादाम्बुजधारिणि ! त्वां
मोहादनुत्तंसयतां जनानाम् ।
मूर्ध्नि स्थिता दुर्लिपयो भवन्ति
प्रशस्तवर्णावलयस्तदीयाः ॥ ५४

85 भूमिश्श्रुतीनां भुवनस्य धात्री
गुणैरनन्ता विपुला विभूत्या ।
स्थिरा स्वयं पालयितुं क्षमा न-
स्सर्वंसहा शौरिपदावनि! त्वम् ॥ ५५

86 स्थैर्यं कुलक्षोणिभृतां विधत्से
शेषादयस्त्वां शिरसा वहन्ति ।
पद्प्रसूता परमस्य पुंसः
पृथ्वी महिम्ना मणिपादुके! त्वम् ॥ ५६

87 दैत्याधिपानां बलिनां किरीटा
निक्षेपणं ते यदि नाभ्यनन्दन् ।
रङ्गेशपादावनि! रङ्गधाम्न-
स्सोपानतां प्राप्य वहन्त्यमी त्वाम् ॥ ५७

88 शेषो गरुत्मान् मणिपादपीठी
त्वञ्चेति पादावनि! विश्वमान्याः ।
तुल्याधिकारा यदि किन्नु सन्त-
स्त्वामेव नित्यं शिरसा वहन्ति ॥ ५८

89 परस्य पुंसः परमं पदं त-
द्बिभर्षि नित्यं मणिपादुके! त्वम् ।
अन्यादृशां व्योमसदां पदानि
त्वय्यायतन्ते यदिदं न चित्रम् ॥ ५९

90 पादौ मुरारेश्शरणं प्रजानां
तयोस्तदेवासि पदावनि! त्वम् ।
शरण्यतायास्त्वमनन्यरक्षा
सन्दृश्यसे विश्रमभूमिरेका ॥ ९०

91 अन्येषु पद्माकमलासनाद्यै-
रङ्गेषु रङ्गाधिपतेश्श्रितेषु ।
पदावनि! त्वामधिगम्य जातं
पदं मुरारेरधिदैवतं वः ॥ ९१

92 क्षणं सरोजेक्षणपादुके! यः
कृतादरः किंकुरुते भवत्याः ।
अकिञ्चनस्यापि भवन्ति शीघ्र
भ्रूकिङ्करास्तस्य पुरन्दराद्याः ॥ ९२

93 वहन्ति ये माधवपादुके! त्वा-
मूह्यन्त एते दिवि निर्विघाताः ।
हंसेन नित्य शरदभ्रभासा
कैलासगौरेण ककुद्मता वा ॥ ९३

94 रुद्रं श्रितो देवगणस्स रुद्रः
पद्मासनं सोऽपि च पद्मनाभम् ।
स त्वामनन्तो न पुनस्त्वमन्यं
क एष पादावनि! ते प्रभावः ॥ ९४

95 परस्य धाम्नः प्रतिपादनार्हां
वदन्ति विद्यां मणिपादुके! त्वाम् ।
यतस्तवैवाधिगमे प्रजानां
दूरीभवन्त्युत्तरपूर्वमंहः ॥ ९५

96 धन्या मुकुन्दस्य पदानुषङ्गा-
द्धनीकृता येन समर्चिता त्वम् ।
दासस्तदीयो मणिपादरक्षे!
लक्ष्म्यालकामप्यधरीकरोति ॥ ९६

97 पदेन विष्णोः किमुतेतरेषां
विसृज्य सङ्गं समुपासते त्वाम् ।
करोषि तान्कि त्वमपेतकामान्
कालेन पादावनि! सत्यकामान् ॥ ९७

98 अभ्यासयोगेन निगृह्यमाणै-
रन्तर्मुखैरात्मविदो मनोभिः ।
मातस्त्वया गुप्तपदं प्रभावा-
दन्वेषयन्त्यागमिकं निधानम् ॥ ९८

99 मूर्ध्ना दधानां मणिपादुके! त्वा-
मुत्तंसितं वा पुरुषं भवत्या ।
वदन्ति केचिद्द्वयमामनाम-
स्त्वामेव साक्षादधिदैवतं नः ॥ ९९

100 मूर्ध्ना सतामधस्ता-<br>
दुपरि च विष्णोः पदेन सङ्घटिताम् ।<br>
अदवीयसीं विमुक्तेः<br>
पदवीमवयन्ति पादुके ! भवतीम् ॥ ७०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

प्रभावपद्धतिः तृतीया ॥

श्री ॥

## चतुर्थी समर्पणपद्धतिः ॥

---

101 भजामः पादुके याभ्यां भरतस्याग्रजस्तदा ।
प्रायः प्रतिप्रयाणाय प्रास्थानिकमकल्पयत् ॥ १

102 राज्यं विहाय रघुवंशमहीपतीनां
पौरांश्च पादरसिकान् पृथिवीञ्च रक्ताम् ।
त्वामेव हन्त चरणावनि ! संप्रयास्यन्
आलम्बत प्रथममुत्तरकोसलेन्द्रः ॥ २

103 प्राप्ते प्रयाणसमये मणिपादरक्षे !
पौरानवेक्ष्य भवती करुणप्रलापान् ।
मञ्जुप्रणादमुखरा विनिवर्तनार्थं
रामं पदग्रहणपूर्वमयाचतेव ॥ ३

104 मत्वा तृणाय भरतो मणिपादरक्षे !
रामेण तां विरहितां रघुराजधानीम् ।
त्वामेव सप्रणयमुज्जयिनीमवन्तीं
मेने महोदयमयीं मधुरामयोध्याम् ॥ ४

105 रामात्मनः प्रतिपदं मणिपादरक्षे !
विश्वम्भरस्य वहनेन परीक्षितां त्वाम् ।
विश्वस्य देवि ! वहने विनिवेशयिष्यन्
विस्रब्ध एव भरतो भवतीं ययाचे ॥ ५

106 भक्त्या परं भवतु तद्भरतस्य साधो-
स्त्वत्प्रार्थनं रघुपतौ मणिपादरक्षे ! ।
केनाशयेन स मुनिः परमार्थदर्शी
भद्राय देवि जगतां भवतीमवादीत् ॥ ६

107 रामे वनं व्रजति पङ्क्तिरथे प्रसुप्ते
राज्यापवादचकिते भरते तदानीम् ।
आश्वासयेत् क इव कोसलवासिनस्तान्
सीतेव चेत्त्वमपि साहसवृत्तिरासीः ॥ ७

108 पादावनि ! प्रभवतो जगतां त्रयाणां
रामादपि त्वमधिका नियतं प्रभावात् ।
नो चेत् कथन्नु भरतस्य तमेव लिप्सोः
प्रत्यायनं परिपणं भवती भवित्री ॥ ८

109 मन्ये नियुज्य भवतीं मणिपादरक्षे !
पार्ष्णिग्रहस्य भरतस्य निवारणार्थम् ।
रत्नाकरं सपदि गोष्पदयन् विजिग्ये
रामः क्षणेन रजनीचरराजधानीम् ॥ ९

110 पादावनि! प्रभुतरानपराधवर्गान्
सोढुं क्षमा त्वमसि मूर्तिमती क्षमेव ।
यत्त्वां विहाय निहताः परिपन्थिनस्ते
देवेन दाशरथिना दशकण्ठमुख्याः ॥ १०

111 वाक्ये गरीयसि पितुर्विहितेऽप्यतृप्त्या
मातुर्मनोरथमशेषमवन्ध्ययिष्यन् ।
मन्ये तदा रघुपतिर्भरतस्य तेने
मातस्त्वयैव मणिमौलिनिवेशलक्ष्मीम् ॥ ११

112 पादाम्बुजाद्विगलितां परमस्य पुंस-
स्त्वामादरेण विनिवेश्य जटाकलापे ।
अङ्गीचकार भरतो मणिपादरक्षे!
गङ्गाधिरूढशिरसो गिरिशस्य कान्तिम् ॥ १२

113 अविकलमधिकर्तुं रक्षणे सप्तलोक्या
रघुपतिचरणेन न्यस्तदिव्यानुभावाम् ।
अभजत भरतस्त्वामञ्जसा पादरक्षे!
मणिमकुटनिवेशत्यागधन्येन मूर्ध्ना ॥ १३

114 इयमविकलयोगक्षेमसिद्ध्यै प्रजाना-
मलमिति भरतेन प्रार्थितामादरेण ।
रघुपतिरधिरोहन्नभ्यषिञ्चत्स्वयं त्वां
चरणनखमणीनां चन्द्रिकानिर्झरेण ॥ १४

115 प्रणयिनि पदपद्मे गाढमाश्लिष्यति त्वां
विधिसुतकथितं तद्वैभवं ते विदन्तः ।
अनुदिनमृषयस्त्वामर्चयन्त्यग्न्यगारे
रघुपतिपदरक्षे ! रामगिर्याश्रमस्थाः ॥ १५

116 नियतमधिरुरोह त्वामनावेदशक्तिं
निजचरणसरोजे शक्तिमाधातुकामः ।
स कथमितरथा त्वां न्यस्य रामो विजह्रे
दृषदुपचितभूमौ दण्डकारण्यभागे ॥ १६

117 रघुपतिपदपद्माद्रत्नपीठे निवेष्टुं
भरतशिरसि लग्नां प्रेक्ष्य पादावनि ! त्वाम् ।
परिणतपुरुषार्थः पौरवर्गस्स्वयं ते
विधिमभजत सर्वो वन्दिवैतालिकानाम् ॥ १७

118 अनन्यराजन्यनिदेशनिष्ठां
चकार पृथ्वीं चतुरर्णवान्ताम् ।
भ्रातुर्यियासोर्भरतस्तदा त्वां
मूर्ध्ना वहन् मूर्तिमतीमिवाज्ञाम् ॥ १८

119 यद्भ्रात्रे भरताय रङ्गपतिना रामत्वमातस्थुषा
नित्योपास्यनिजाङ्घ्रिनिष्क्रियतया निश्चित्य विश्राणितम् ।
योगक्षेमवहं समस्तजगतां यद्गीयते योगिभिः
पादत्राणमिदं मितंपचकथामह्नाय मे निह्नुताम् ॥ १९

120 भरतस्येव ममापि
प्रशमितविश्वापवाददुर्जाता ।
शेषेव शिरसि नित्यं
विहरतु रघुवीरपादुके! भवती ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

समर्पणपद्धतिः चतुर्थी ॥

श्री ॥

## पञ्चमी प्रतिप्रस्थानपद्धतिः ॥

---

121 प्रशास्ते रामपादाभ्यां पादुके पर्युपास्महे ।
आनृशंस्यं ययोरासीदाश्रितेष्वनवग्रहम् ॥ १

122 भृशातुरसहोदरप्रणयखण्डनस्वैरिणा
पदेन किमनेन मे वनमिहावनादिच्छता ।
इतीव परिहाय तन्निववृते स्वयं यत्पुरा
पदत्रमिदमाद्रिये धृतजगत्त्रयं रङ्गिणः ॥ २

123 दशवदनविनाशं वाञ्छतो यस्य चक्रे
दशरथमनघोक्ति दण्डकारण्ययात्रा ।
स च भरतविमर्दे सत्यसन्धस्त्वयासीत्
रघुपतिपदरक्षे ! राजधानीं प्रयान्त्या ॥ ३

124 अभ्युपेतविनिवृत्तिमाहसा
देवि ! रङ्गपतिरत्नपादुके ! ।
अत्यशेत भवती महीयसा
पारतन्त्र्यविभवेन मैथिलीम् ॥ ४

125 अव्याहतां रघुपतेर्व्रजतः प्रतिज्ञा-
मंसाधिरोहणरसे विहते धरण्याः ।
प्रादान्निवृत्य भवती मणिपादरक्षे !
स्पर्शं पदेन विगतव्यवधानखेदम् ॥ ५

126 मन्त्राभिषेकविरहाद्व्रजता विशुद्धिं
संस्कारवर्जनवशादभिसंस्कृतेन ।
मूर्ध्ना निनाय भरतो मणिपादुके ! त्वां
रामाज्ञया विनिहितामिव राज्यलक्ष्मीम् ॥ ६

127 रक्षार्थमस्य जगतो मणिपादरक्षे !
रामस्य पादकमलं समये त्यजन्त्योः ।
किं दुष्करं तव विभूतिपरिग्रहो वा
किं वा विदेहदुहितुः कृपणा दशा सा ॥ ७

128 सीतासखस्य सहसा चरणारविन्दात्
भक्त्या नते कृतपदा भरतोत्तमाङ्गे ।
आरुह्य नागमभितो भवती वितेने
मायूरचामरभरं मणिरश्मिजालैः ॥ ८

129 मूर्ध्ना मुकुन्दपदरक्षिणि ! बिभ्रतस्त्वा-
माविर्मदस्य रघुवीरमदावलस्य ।
आमोदिभिस्सपदि दानजलप्रवाहै-
र्लेभे चिराद्वसुमती रुचिरं विलेपम् ॥ ९

130 आशाः प्रसाधयितुमम्ब तदा भवत्यां
दैवादकाण्डशरदीव समुत्थितायाम् ।
स्तोकावशेषसलिलास्सहसा बभूवु-
स्साकेतयौवतविलोचनवारिवाहाः ॥ १०

131 अन्तेवसन्नचरमस्य कवेस्सयोगी
वन्यान्प्रगृह्य विविधानुपदाविशेषान् ।
आतस्थुषीं रघुकुलोचितमौपवाह्यं
प्रत्युज्जगाम भवतीं भरतोपनीताम् ॥ ११

132 मातस्त्वदागमनमङ्गलदर्शिनीनां
साकेतपक्ष्मलदृशाञ्चटुलाक्षिभृङ्गैः ।
जातानि तत्र सहसा मणिपादरक्षे !
वातायनानि वदनैश्शतपत्रितानि ॥ १२

133 साकेतसीम्नि भवती मणिपादरक्षे !
माङ्गल्यलाजनिकरैरवकीर्यमाणा ।
कीर्तिस्स्वयंवरपतेर्भरतस्य काले
वैवाहिकी जननि ! वह्निशिखेव रेजे ॥ १३

134 छत्रेन्दुमण्डलवती मणिपादुके ! त्वं
व्याधूतचामरकलापशरप्रसूना ।
सद्यो बभूविथ समग्रविकासहेतु-
स्साकेतपौरवनितानयनोत्पलानाम् ॥ १४

135 प्रैक्षन्त वक्त्रैर्मणिपादरक्षे !
शत्रुञ्जयं शैलमिवाधिरूढाम् ।
रामाभिधानप्रतिपन्नहर्षै-
रुत्तानितैरुत्तरकोसलास्त्वाम् ॥ १५

136 द्रष्टुं तदा राघवपादरक्षे !
सीतामिव त्वां विनिवर्तमानाम् ।
आसन्नयोध्यापुरसुन्दरीणा-
मौत्सुक्यलोलानि विलोचनानि ॥ १६

137 आस्थाय तत्र स्फुटबिन्दुनाद
स्तम्बेरमं तादृशसन्निवेशम् ।
अदर्शयस्त्वं पुरमध्यभागे
पादावनि ! त्वत्प्रणवाश्रयत्वम् ॥ १७

138 दशग्रीवस्तम्बेरमदलनदुर्दान्तहृदये
विहारस्वाच्छन्द्याद्विशति रघुसिंहे वनभुवम् ।
स्ववात्सल्यक्रोडीकृतभरतशावेव भवती
निराबाधां पादावनि ! न विजहौ कोसलगुहाम् ॥ १८

139 कैकेयीवरदानदुर्दिननिरालोकस्य लोकस्य यत्
त्राणार्थं भरतेन भव्यमनसा साकेतमानीयत ।
रामत्यागसहैरसह्यविरहं रङ्गक्षितीन्द्रस्य तत्
पादत्राणमनन्यतन्त्रफणितेरापीडमीडीमहि ॥ १९

10 समुपस्थिते प्रदोषे
सहसा विनिवृत्य चित्रकूटवनात् ।
अभजत पुनर्जनपदं
वत्सं धेनुरिव पादुके! भवती ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**प्रतिप्रस्थानपद्धतिः पञ्चमी ॥**

श्री ॥

## षष्ठी अधिकारपरिग्रहपद्धतिः ॥

---

141 अधीष्टे पादुका सा मे यस्यास्साकेतवासिभिः ।
अन्वयव्यतिरेकाभ्यामन्वमीयत वैभवम् ॥ १

142 मोचितस्थिरचरानयत्नतः
कोसलान् जनपदानुपास्महे ।
येषु कांश्चन बभूव वत्सरान्
दैवतं दनुजवैरिपादुका ॥ २

143 साम्राज्यसंपदिव दासजनोचिता त्वं
रामेण सत्यवचसा भरताय दत्ता ।
स त्वां निवेश्य चरणावनि! भद्रपीठे
पृथ्वीं बुभोज बुभुजे च यशोविभूतिम् ॥ ३

144 भोगाननन्यमनसां मणिपादुके! त्वं
पुष्णासि हन्त भजतामनुषङ्गसिद्धान् ।
तेनैव नूनमभवद्भरतस्य साधो-
रप्रार्थितं तदिह राज्यमवर्जनीयम् ॥ ४

145 रामप्रयाणजनितं व्यपनीय शोकं
रत्नासने स्थितवती मणिपादरक्षे ! ।
पृथ्वीं निजेन यशसा विहितोत्तरीया-
मेकातपत्रतिलकां भवती वितेने ॥ ५

146 रामाज्ञया परवती परिगृह्य राज्यं
रत्नासन रघुकुलोचितमाश्रयन्ती ।
शुद्धां पदावनि ! पुनर्भवती वितेने
स्वातन्त्र्यलेशकलुषां भरतस्य कीर्तिम् ॥ ६

147 पौलस्त्यवीरवदनस्तबकावसानात्
पुष्पाणि दण्डकवनेष्ववचेतुमिच्छोः ।
रक्षाधुरं धृतवती मणिपादुके ! त्वं
रामस्य मैथिलसुतासहिते प्रचारे ॥ ७

148 पादावनि ! प्रचलचामरबृन्दमध्ये
भद्रासनास्तरगता भवती विरेजे ।
आकीर्णदिव्यसलिले कटके सुमेरो-
रम्भोजिनीव कलहायितहंसयूथा ॥ ८

149 मान्ये रघूद्वहपदे मणिपादुके ! त्वां
विन्यस्य विग्रहवतीमिव राज्यलक्ष्मीम् ।
आलोलमक्षवलयी भरतो जटावा-
नालम्ब्य चामरमनन्यमनास्सिषेवे ॥ ९

150 प्राप्ते दिवं दशरथे भरते विलक्षे
पर्याकुलेषु परमुत्तरकोसलेषु ।
त्वञ्चेदुपेक्षितवती क इवाभविष्य-
द्रोपायितुं गुहसखस्य विभोः पदं तत् ॥ १०

151 भ्रातुर्यदम्ब ! विरहाद्भरते विषण्णे
दाक्षिण्यमाश्रितवती मणिपादुके ! त्वम् ।
आसीद्दशोपजगतां श्रवणामृतं त
द्वाचालकाहलसहं विरुदं तदा ते ॥ ११

152 राज्यं तदा दशरथादनु रामतः प्रा-
ग्विभ्राणया चरणरक्षिणि ! वीतखेदम् ।
तुल्याधिकारभजनेन बभूव धन्यो
वंशस्त्वयाम्ब ! मनुवंशमहीपतीनाम् ॥ १२

153 वर्षाणि तानि वृषलो न तपांसि तेपे
बालो न कश्चिदपि मृत्युवशं जगाम ।
राज्ये तवाम्ब ! रघुपुङ्गवपादरक्षे !
नैवापरं प्रतिविधेयमभूत्प्रसक्तम् ॥ १३

154 विश्वं त्वदाश्रितपदाम्बुजसंभवायां
यस्यां प्रतिष्ठितमिदं मणिपादरक्षे ! ।
आसीदनन्यशरणा समये यथावत्
सापि त्वया वसुमती विहितप्रतिष्ठा ॥ १४

155 प्रायेण रामविरहव्यथिता तदानी-
मुत्सङ्गमाश्रितवती तव राज्यलक्ष्मीः ।
तामेव देवि ! ननु जीवयितुं जलार्द्रा-
मङ्गीचकार भवती भरतोपनीताम् ॥ १५

156 वीरव्रतप्रणयिनि प्रथमे रघूणां
प्राप्ते चिराय भरते व्रतमासिधारम् ।
त्यक्त्वा पदावनि ! तदा विविधान्विहारा-
नैकासिकाव्रतमपूर्वमवर्तयस्त्वम् ॥ १६

157 काकुत्स्थपादविरहप्रतिपन्नमौनां
निस्पन्दतामुपगतां मणिपादरक्षे ! ।
आश्वासयन्निव मुहुर्भरतस्तदानीं
शीतैरवीजयत चामरमारुतैस्त्वाम् ॥ १७

158 यत्रक्वचिद्विहरतोऽपि पदारविन्द
रक्ष्यं मया रघुपतेरिति भावयन्त्या ।
निश्शेषमेव सहसा मणिपादरक्षे !
निष्कण्टकं जगदिदं विदधे भवत्या ॥ १८

159 रामं त्वया विरहितं भरतं च तेन
त्रातुं पदावनि ! तदा यदभूत्प्रतीतम् ।
रामानुजस्य तव चाम्ब ! जगत्समस्तं
जागर्ति तेन खलु जागरणव्रतेन ॥ १९

160 अन्तःपुरे परिजनैस्समयोपयातै-
रभ्यर्चिता भवसि या विनयोपपन्नैः ।
सा कोसलेश्वरपदावनि! भूपतीनां
सङ्घट्टनं मकुटपङ्क्तिभिरन्वभूस्त्वम् ॥ २०

161 प्राप्याधिकारमुचितं भुवनस्य गुप्त्यै
भद्रासनं भरतवन्दितमाश्रयन्त्या ।
मध्येऽवतीर्णमिव माधवपादरक्षे!
मातस्त्वयापि मनुवंशमहीपतीनाम् ॥ २१

162 राजासने रघुकुलोद्वहपादरक्षे!
नीराजनं समभवत्समयोचितं ते ।
श्लाघावशेन बहुशः परिघूर्णिताभि-
स्सामन्तमौलिमणिमङ्गलदीपिकाभिः ॥ २२

163 पृथ्वीपतीनां युगपत् किरीटाः
प्रत्यर्थिनां प्राणितुमर्थिनां च ।
प्रापुस्तदा राघवपादरक्षे!
त्वदीयमास्थानिकपादपीठम् ॥ २३

164 प्रणम्य रङ्गेश्वरपादरक्षे!
दूरोपनीतैरुपदाविशेषैः ।
सभाजयन्ति स्म तदा सभाया-
मुच्चैस्तरामुत्तरकोसलास्त्वाम् ॥ २४

165 अपावृतद्वारमयन्त्रिताश्वं
रङ्गेशपादावनि! पूर्वमासीत् ।
त्वया यदृच्छासुखसुप्तपान्थं
रामे वनस्थेऽपि पदं रघूणाम् ॥ २५

166 अनन्यभक्तिर्मणिपादुके! त्वा-
मभ्यर्चयन् दाशरथिर्द्वितीयः ।
विकल्प्यमानः प्रथमेन कीर्त्या
वन्द्यस्स्वयं व्योमसदां बभूव ॥ २६

167 अरण्ययोग्यं पदमस्पृशन्ती
रामस्य राजार्हपदे निविष्टा ।
आस्थाननित्यासिकया निरास्थः
स्वर्गौकसां स्वैरगतेर्विघातम् ॥ २७

168 राजासने चेद्भवनी निषण्णा
रङ्गेशपादावनि! तन्न चित्रम् ।
यत्राधिरूढाः क्रमशः पुरा त्वा-
मुत्तंसयन्ते रघुसार्वभौमाः ॥ २८

169 भद्रासनं चेत् परिवृत्तमासी-
द्देवि! क्षणं दक्षिणतो मुखं ते ।
कथं भवेत्काञ्चनपादरक्षे!
रामस्य रक्षोमृगयाविहारः ॥ २९

170 यावत्त्वया राघवपादरक्षे !
जिगीषिता राक्षसराजधानी ।
मालेव तावल्लुलिता मदान्धै-
रुद्यानशाखामृगयूथपैस्ते ॥ ३०

171 महीक्षितां राघवपादरक्षे !
भद्रासनस्थां भवतीं स्पृशन्तः ।
पूर्वं तथात्वे नियतेऽपि भूयः
कल्याणतामानशिरे किरीटाः ॥ ३१

172 अनिच्छतः पाण्डरमातपत्रं
पित्रा वितीर्णं मणिपादरक्षे ! ।
आसीत्त्वदर्थं विधृतेन तेन
च्छायासमग्रा भरतस्य मौलौ ॥ ३२

173 पादुके ! रघुपतौ यदृच्छया
प्रस्थिते वनविहारकौतुकात् ।
आधिराज्यमधिगम्य ते युवा-
मक्षतं वसुमतीमरक्षतम् ॥ ३३

174 रघुवीरपदानुषङ्गमात्रात्
परिबर्हेषु निवेशिता यदि त्वम् ।
अधिकारदिने कथं पुनस्ते
परिवारास्तव पादुके ! बभूवुः ॥ ३४

175 पुरुषार्थचतुष्टयार्थिनीनां
परिषत्ते महिता वसिष्ठमुख्यैः ।
क्रयविक्रयपत्तनं प्रजाना-
मभवत् काञ्चनपादुके ! तदानीम् ॥ ३५

176 मनुजत्वनिरोहितेन शक्ये
वपुषैकेन विरोधिनां निरासे ।
अभजद्भरतादिभेदमीशः
स्वयमाराधयितुं पदावनि ! त्वाम् ॥ ३६

177 मगधाङ्गकलिङ्गवङ्गमुख्यान्
विमतान् रन्ध्रगवेषिणस्ससैन्यान् ।
रघुपुङ्गवपादुके ! विजिग्ये
भरतश्शासनमुद्वहन् भवत्याः ॥ ३७

178 अनितरवहनीयं मन्त्रिमुख्यैर्यदा त-
त्त्वयि विनिहितमासीत्सूर्यवंशाधिराज्यम् ।
रघुपतिपदरक्षे ! रत्नपीठे तदानीं
श्रियमिव ददृशुस्त्वां सादरं लोकपालाः ॥ ३८

179 परिहृतदण्डकाध्वगमनं पदरक्षिणि ! तत्
परिणतविश्वसंपदुदयं युवयोर्द्वितयम् ।
रघुपतिरत्नपीठमधिरुह्य तदा विदधे
व्यपगतवैरिभूपनिलयं वसुधावलयम् ॥ ३९

180 प्राप्तोदया तदानीं
किमपि तमस्तन्निराकरोद्भवती ।
तनुरिवम नुकुलजनुषां
प्रसवित्री रत्नपादुके ! सवितुः ॥ ४०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

अधिकारपरिग्रहपद्धतिः षष्ठी ॥

श्री ॥

# सप्तमी अभिषेकपद्धतिः ॥

---

181 पाहि नः पादुके ! यस्या विधास्यन्नभिषेचनम् ।
आभिषेचनिकं भाण्डं चक्रे रामः प्रदक्षिणम् ॥ १

182 राघवस्य चरणौ पदावनि !
प्रेक्षितुं त्वदभिषेकमीषतुः ।
आभिषेचनिकभाण्डसन्निधौ
यत्प्रदक्षिणगतिश्शनैर्ययौ ॥ २

183 मूर्धाभिषिक्तैर्नियमेन वाह्यौ
विचिन्त्य नूनं रघुनाथपादौ ।
रत्नासनस्थां मणिपादुके ! त्वाम्
रामानुजन्मा भरतोऽभ्यषिञ्चत् ॥ ३

184 भ्रातुर्नियोगेप्यनिवर्तमानं
राज्याभिषेकं च परित्यजन्तम् ।
रामानुजौ तौ ननु पारतन्त्र्या-
दुभावुभाभ्यां भवती जिगाय ॥ ४

185 निवेश्य रङ्गेश्वरपादरक्षे!
भद्रासने सादरमभ्यषिञ्चत् ।
वशी वसिष्ठो मनुवंशजाना
महीक्षितां वंशपुरोहितस्त्वाम् ॥ ५

186 कृताभिषेका भवती यथाव-
द्रङ्गेशपादावनि! रत्नपीठे ।
गङ्गानिपातस्नपितां सुमेरो-
रधित्यकाभूमिमधश्चकार ॥ ६

187 वसिष्ठमुख्यैर्विहिताभिषेकां
राज्यासने रामनिवेशयोग्ये ।
तुष्टाव रङ्गेश्वरपादरक्षे!
प्राचेतसस्त्वां प्रथमः कवीनाम् ॥ ७

188 रक्षोवधार्थं मणिपादरक्षे!
रामात्मनो रङ्गपतेः प्रवासे ।
रक्षोपकाराद्भवती वितेने
राजन्वतीं कोसलराजधानीम् ॥ ८

189 प्राप्ताभिषेका मणिपादरक्षे!
प्रतापमुग्रं प्रतिपद्यमाना ।
शशास पृथ्वीं भवती यथावत्
साकेतसिंहासनसार्वभौमी ॥ ९

190 दशाननादीन्मणिपादरक्षे !
जिगीषतो दाशरथेर्वियोगात् ।
जातोपतापा त्वयि संप्रयुक्तै-
स्तीर्थोदकैरुच्छ्वसिता धरित्री ॥ १०

191 अध्यासितं मनुमुखैः क्रमशो नरेन्द्रै-
रारोप्य देवि ! भवतीं तपनीयपीठम् ।
राज्याभिषेकमनघं मणिपादरक्षे !
रामोचितं तव वशं भरतो वितेने ॥ ११

192 स्नेहेन देवि ! भवतीं विषयेऽभिषिञ्चन्
द्विस्सप्तसङ्ख्यभुवनोदरदीपरेखाम् ।
जातं रघूद्वहदिवाकरविप्रयोगा-
दन्धंतमिस्रमहरद्भरतः प्रजानाम् ॥ १२

193 हस्तापचेयपुरुषार्थफलप्रसूते-
र्मूलं पदावनि ! मुकुन्दमहीरुहस्त्वम् ।
छायाविशेषमदिशद्यदसौ प्रजाना-
मावर्जितैस्त्वयि शुभैरभिषेकतोयैः ॥ १३

194 अह्नाय रामविरहात्परिखिन्नवृत्ते-
राश्वासनाय भवती मणिपादरक्षे ! ।
तीर्थाभिषेकमपदिश्य वसुन्धराया-
श्चक्रे तदा समुचितं शिशिरोपचारम् ॥ १४

195 मालिन्यमाश्रितवती मणिपादरक्षे !
पङ्केन केकयसुताकलहोत्थितेन ।
शुद्धिं परामधिजगाम वसुन्धरेयं
त्वत्तः क्षणान्निपतितैरभिषेकतोयैः ॥ १५

196 आवर्जितं मुनिगणेन जगद्विभूत्यै
तोयं पदावनि ! तदा त्वयि मन्त्रपूतम् ।
मूलावसेकसलिलं निगमद्रुमाणां
शापोदकञ्च समभूत्क्षणदाचराणाम् ॥ १६

197 विप्रोषिते रघुपतौ भवती यथार्हम्
मान्ये पदे स्थितिमती मनुवंशजानाम् ।
आत्मन्यथर्वनिपुणैः प्रहितैः प्रजाना-
मश्रूण्यपास्यदभिषेकजलप्रवाहैः ॥ १७

198 प्रायो विशोषितरसा पतिविप्रयोगा-
त्पर्याकुलीकृतसमुद्रपयोधरा गौः ।
अम्ब ! त्वदीयमभिषेकपयः पिबन्ती
धेनुर्बभूव जगतां धनधान्यदोग्ध्री ॥ १८

199 वृत्ते यथावदभिषेकविधौ बभासे
पश्चात्तवांब ! भरतेन धृतः किरीटः ।
आकस्मिकस्वकुलविप्लवशान्तिहर्षात्
प्राप्तस्त्विषामिव पतिर्मणिपादुके ! त्वाम् ॥ १९

200 मनुवंशपुरोहितेन मन्त्रै-
रभिमन्त्र्य त्वयि पादुके ! प्रयुक्तम् ।
अभिषेकजलं क्षणेन राज्ञां
शमयामास समुत्थितान् प्रतापान् ॥ २०

201 पादपादुपहृता रघूद्वहा-
दालवालमिव पीठमाश्रिता ।
अभ्यषेचि भवती तपोधनैः
पारिजातलतिकेव पादुके ! ॥ २१

202 अलघुभिरभिषेकव्यापृतैरम्बुभिस्ते
दिनकरकुलदैन्यं पादुके ! क्षालयिष्यन् ।
स खलु कमलयोनेस्सूनुराधत्त मन्त्रे-
ष्वधिकनियमयोगां शक्तिमाथर्वणेषु ॥ २२

203 दिनकरकुलजानां देवि ! पृथ्वीपतीनां
निरुपधिमधिकारं प्राप्नुवत्यां भवत्याम् ।
अजनिषत समस्ताः पादुके ! तावकीन-
स्तपनसलिलयोगान्निम्नगास्तुङ्गभद्राः ॥ २३

204 तव विधिवदुपात्ते सार्वभौमाभिषेके
भरतसमयविद्भिः पादुके ! मन्त्रिमुख्यैः ।
त्वदवधिनिजकर्मस्थायिनीनां प्रजानां
प्रथमयुगविशेषाः प्रादुरासन् विचित्राः ॥ २४

205 अवसितरिपुशब्दानन्वभूस्त्वं तदानीं
रघुपतिपदरक्षे! लब्धराज्याभिषेका ।
चलितभुजलतानां चामरग्राहिणीनां
मणिवलयनिनादैर्मेदुरान्मन्त्रघोषान् ॥ २५

206 समुचितमभिषेक पादुके! प्राप्नुवत्यां
त्वयि विनिपतितानां देवि! तीर्थोदकानाम् ।
ध्वनिरनुगतमंत्रस्सीदतां कोसलानां
शमयितुमलमासीत्संकुलानार्तनादान् ॥ २६

207 द्विविपदनुविधेयं देवि! राज्याभिषेकं
भरत इव यदि त्व पादुके! नान्वमंस्थाः ।
कथमिव रघुवीरः कल्पयेदल्पयत्न-
स्त्रिचतुरशरपातैस्तादृशं देवकार्यम् ॥ २७

208 कतिचन पदपद्मस्पर्शसौख्यं त्यजन्ती
व्रतमतुलमधास्त्वं वत्सरान् सावधाना ।
रघुपतिपदरक्षे! राक्षसैस्त्रासितानां
रणरणकविमुक्तं येन राज्यं सुराणाम् ॥ २८

209 अथर्वोपज्ञं ते विधिवदभिषेकं विदधतां
वसिष्ठादीनामप्युपचितचमत्कारभरया ।
त्वदास्थान्या रङ्गक्षितिरमणपादावनि! तदा
लघीयस्यो जाता रघुपरिषदाहोपुरुषिकाः ॥ २९

210 अभिषेचयतु स रामः
पदेन वा स्पृशतु पादुके ! भवतीम् ।
अविशेषितमहिमा त्वं
क्व वा विशेषः क्षमासमेतानाम् ॥ ३०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**अभिषेकपद्धतिस्सप्तमी ॥**

श्री ॥

# अष्टमी निर्यातनापद्धतिः ॥

---

211 अभिषेकोत्सवात्तस्माद्यस्या निर्यातनोत्सवः ।
अत्यरिच्यत तां वन्दे भव्यां भरतदेवताम् ॥ १

212 उपास्य वर्षाणि चतुर्दश त्वा-
मुत्तारिकामुत्तरकोसलस्थाः ।
सनन्दनाद्यैरपि दुर्विगाहं
सान्तानिकं लोकमवापुरग्र्यम् ॥ २

213 पादावनि! प्रत्ययितो हनूमान्
सीतामिव त्वां चिरविप्रयुक्ताम् ।
प्रणम्य पौलस्त्यरिपोरुदन्तम्
विज्ञापयामास विनीतवेषः ॥ ३

214 तवाभिषेकान्मणिपादरक्षे!
मूले निषेकादिव वृद्धियोग्यात् ।
जहुस्तदैव त्रिदशाङ्गनानां
प्रम्लानतां पत्रलताङ्कुराणि ॥ ४

215 सर्वतस्त्वदभिषेकवासरे
सम्यगुद्धृतसमस्तकण्टके ।
राघवस्य विपिनेषु पादुके !
यत्र कामगमता व्यवस्थिता ॥ ५

216 किं चतुर्दशभिरेव वत्सरै
र्नित्यमेव मणिपादुके ! युवाम् ।
पादयोस्त्रिभुवनाधिराजयो-
र्यौवराज्यमधिगच्छतं स्वयम् ॥ ६

217 रामस्य राक्षसवधत्वरितस्य काले
पादावनि ! प्रकटयन्निव पार्ष्णिगुप्तिम् ।
आचित्रकूटमधिगम्य शशंस वार्ता-
मव्याहतत्वदभिषेकमृदङ्गनादः ॥ ७

218 भद्राणि देवि ! जगतां प्रतिपादयिष्यन्
प्रागेव येन भवतीं भरतोऽभ्यषिञ्चत् ।
मन्ये कपीश्वरविभीषणयोर्यथावत्
सन्तन्यते स्म तत एव किलाभिषेकः ॥ ८

219 संभिद्यमानतमसा सरयूपनीतै-
स्संवर्धितस्तव शुभैरभिषेकतोयैः ।
मन्ये बभूव जलधिर्मणिपादरक्षे !
रामास्त्रपावकशिखाभिरशोषणीयः ॥ ९

220 पादावनि ! त्वदभिषेचनमङ्गलार्थं
भेरीशतं भृशमताड्यत यत्प्रतीतैः ।
आकर्ण्य तस्य सहसा तुमुलं निनादं
लङ्काकवाटनयनानि निमीलितानि ॥ १०

221 तापोद्गमस्त्वदभिषेकजलप्रवाहै-
रुत्सारितस्त्वरितमुत्तरकोसलेभ्यः ।
लेभे चिराय रघुपुङ्गवपादरक्षे !
लङ्कावरोधसुदृशां हृदयेषु वासम् ॥ ११

222 आवर्जितं विधिविदा मणिपादरक्षे !
पद्मासनप्रियसुतेन पुरोहितेन ।
आसीन्निदानमभिषेकजलं त्वदीयं
नक्तञ्चरप्रणयिनीनयनोदकानाम् ॥ १२

223 देवि ! त्वया स्नपनसंपदि संश्रितायां
दग्धे पुरे दशमुखस्य वलीमुखेन ।
आसीत्ततः प्रभृति विश्वजनप्रतीत-
मद्भ्योऽग्निरित्यवितथं वचनं मुनीनाम् ॥ १३

224 आयोध्यकैस्त्वदभिषेकसमिद्धहर्षै-
राध्मापिताश्श्रुतिसुखं ननु ते तदानीम् ।
रामस्य राक्षसशिरोलवनेऽप्यशाम्यन्
येषां ध्वनिर्विजयशङ्खरवो बभूव ॥ १४

225 प्रथयितुमभिषेकं पादुके ! तावकीनं
दुरितशमनदक्षे दुन्दुभौ ताड्यमाने ।
सपदि परिगृहीतं साध्वसं देवि ! नूनं
दशवदनवधूनां दक्षिणैर्नेत्रकोशैः ॥ १५

226 रघुपतिपदरक्षे ! रत्नपीठे यदा त्वा-
मखिलभुवनमान्यामभ्यषिञ्चद्वसिष्ठः ।
दशमुखमहिषीभिर्देवि ! बाष्पायिताभिः
स्तनयुगमभिषेक्तुं तत्क्षणादन्वमंस्थाः ॥ १६

227 रामास्त्राणि निमित्तमात्रमिह ते लब्धाभिषेका स्वयं
रक्षस्तत्क्षपयांचकार भवती भद्रासनस्थायिनी ।
यद्दोष्णामतिवेलदर्पदवथुज्वालोष्मलानां तदा
निष्पिष्टैः कलधौतशैलशिखरैः कर्पूरचूर्णायितम् ॥ १७

228 श्रुत्वैवं हनुमन्मुखाद्रघुपतेः प्रत्यागतिं तत्क्षणा-
दासीद्भरतानुवर्तनवशादारूढकुम्भस्थलाम् ।
कालोन्निद्रकटुष्णदानमदिरामाद्यद्द्विरेफध्वनि-
श्लाघाचाटुभिरस्तुतेव भवतीं शत्रुञ्जयः कुञ्जरः ॥ १८

229 प्रत्यागतस्य भवतीमवलोक्य भर्तुः
पादारविन्दसविधे भरतोपनीताम् ।
पूर्वाभिषेकविभवाभ्युचितां सपर्यां
मध्ये सतामकृत मैथिलराजकन्या ॥ १९

230 संप्रेक्ष्य मैथिलसुता मणिपादरक्षे !
प्रत्युद्गतस्य भवती भरतस्य मौलौ ।
निर्दिश्य सा निभृतमञ्जलिना पुरस्तात्
तारादिकाः प्रियसखीरशिषत्प्रणन्तुम् ॥ २०

231 तुल्येऽपि देवि ! रघुवीरपदाश्रयत्वे
पूर्वाभिषेकमधिगम्य गरीयसी त्वम् ।
तेनैव खल्वभजतां मणिपादरक्षे !
रक्षःप्लवङ्गमपती भवतीं स्वमूर्ध्ना ॥ २१

232 निर्वृत्तराक्षसचमूमृगयाविहारो
रङ्गेश्वरस्स खलु राघववंशगोप्ता ।
वंशक्रमादुपनत पदमाददानो
मान्यं पुनस्त्वयि पदं निदधे स्वकीयम् ॥ २२

233 तत्तादृशोश्चरणयोः प्रणिपत्य भर्तुः
पौरास्त्वया विधुतयोः प्रतिपन्नसत्त्वाः ।
प्राप्ताभिषेकविभवामपि पादुके ! त्वा-
मानन्दबाष्पसलिलैः पुनरभ्यषिञ्चन् ॥ २३

234 मातस्त्वयैव समये विषमेऽपि सम्य-
ग्राजन्वतीं वसुमतीमवलोक्य रामः ।
सञ्जीवनाय भरतस्य समग्रभक्तेः
सत्यप्रतिश्रवतयैव चकार राज्यम् ॥ २४

235 पादावनि ! प्रतिगतस्य पुरीमयोध्यां
पौलस्त्यहन्तुरभिषेकजलार्द्रमूर्तेः ।
अंसे यथार्हमधिवास्य निजैर्यशोभिः
कस्तूरिकेव निहिता वसुधा त्वयैव ॥ २५

236 यासौ चतुर्दशसमाः पतिविप्रयुक्ता
विश्वंभरा भगवती विधृता भवत्या ।
विन्यस्य तां रघुपतेर्भुजशैलशृङ्गे
भूयोऽपि तेन सहितां भवती बभार ॥ २६

237 निस्तीर्णदुःखजलधेरनघस्य देवि !
त्वत्संप्रयुक्तरघुनाथपदान्वयेन ।
सद्यस्सनन्दनमुखैरपि दुर्निरीक्षा
साम्राज्यसंपदपरा भरतस्य जज्ञे ॥ २७

238 निर्गत्य देवि ! भरताञ्जलिपद्ममध्यात्
भूयस्समागतवती पुरुषोत्तमेन ।
पद्मेव भद्रमखिल मणिपादरक्षे !
प्रादुश्चकार भवती जगतां त्रयाणाम् ॥ २८

239 रघुपतिमधिरोप्य स्वोचिते रत्नपीठे
प्रगुणमभजथास्त्वं पादुके ! पादपीठम् ।
तदपि बहुमतिस्ते तादृशी नित्यमासीत्
क्व नु खलु महितानां कल्प्यते तारतम्यम् ॥ २९

240 अनुवृत्तरामभावश्शङ्के निर्विघ्नचक्रवर्तिपदाम् ।
अधुनापि रङ्गनाथस्सचमत्कार पदेन भजति त्वाम् ॥ ३०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

निर्यातनापद्धतिरष्टमी ॥

श्रीः ॥

## वन्दिवैतालिकपद्धतिर्नवमी ॥

---

241 नमस्ते पादुके ! पुंसां संसारार्णवसेतवे ।
यदारोहस्य वेदान्ता वन्दिवैतालिकाः स्वयम् ॥ १

242 उचितमुपचरिष्यन रङ्गनाथ ! प्रभाते
विधिशिवसनकाद्यान् बाह्यकक्ष्यानिरुद्धान् ।
चरणकमलसेवासौख्यसाम्राज्यभाजां
प्रथमविहितभागां पादुकामाद्रियेथाः ॥ २

243 पद्माजुष्टं भजतु चरणं पादुका लब्धवारा
प्रत्यासन्नास्तव परिजनाः प्रातरास्थानयोग्याः ।
अर्धोन्मेषादधिकसुभगामर्धनिद्रानुषङ्गां
नाभीपद्मे तव नयनयोर्नाथ ! पश्यन्तु शोभाम् ॥ ३

244 उपनमति मुहूर्तं शेषसिद्धान्तसिद्धं
तदिह चरणरक्षा रङ्गनाथ ! त्वयैषा ।
मृदुपदमधिरूढा मञ्जुभिश्शिञ्जितैस्स्वै-
रुपदिशतु जनानामुत्सवारंभवार्ताम् ॥ ४

245 रङ्गाधीश ! मरुद्गणस्य मकुटादाम्नायबृन्दस्य वा
प्रत्यानीय समर्पिता विधिमुखैर्वारक्रमादागतैः ।
वाहारोहणसंभृतं श्रमभरं सम्यग्विनेतुं क्षमा
लीलासञ्चरणप्रिया स्पृशतु ते पादाम्बुजं पादुका ॥ ५

246 वृत्तं क्रमेण बहुधा नियुतं विधीना-
मर्धं द्वितीयमिदमङ्कुरितं तवाह्नः ।
नीलासखीभिरुपनीय निवेश्यमाना
मङ्क्तुं प्रभो त्वरयते मणिपादुका त्वाम् ॥ ६

247 दिव्याप्सरोभिरुपदर्शितदीपवर्गे
रङ्गाधिराज ! सुभगे रजनीमुखेऽस्मिन् ।
संरक्षिणी चरणयोस्सविलासवृत्ति-
र्नीराजनासनमसौ नयतु स्वयं त्वाम् ॥ ७

248 आसनादुचितमासनान्तरं
रङ्गनाथ ! यदि गन्तुमीहसे ।
सन्नतेन विधिना समर्पितां
सप्रसादमधिरोह पादुकाम् ॥ ८

249 परिजनवनिताभिः प्रेषितः प्राञ्जलिस्त्वां
प्रणमति मदनोऽयं देव ! शुद्धान्तदासः ।
फणिपतिशयनीयं प्रापयित्री सलीलं
पदकमलमियं ते पादुका पर्युपास्ताम् ॥ ९

250 इति निगमवन्दिवचसा
समये समये गृहीतसङ्केतः ।
अभिसरति रङ्गनाथः
प्रतिपदभोगाय पादुके भवतीम् ॥ १०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

वन्दिवैतालिकपद्धतिः नवमी ॥

श्री ॥

## शृङ्गारपद्धतिर्दशमी ॥

---

251 शौरेश्शृङ्गारचेष्टानां प्रसूतिं पादुकां भजे ।
यामेष भुङ्क्ते शुद्धान्तात् पूर्वं पश्चादपि प्रभुः ॥ १

252 प्रणतत्रिदशेन्द्रमौलिमाला-
मकरन्दार्द्रपरागपङ्किलेन ।
अनुलिम्पति पादुके ! स्वयं त्वा-
मनुरूपेण पदेन रङ्गनाथः ॥ २

253 अवदातहिमांशुकानुषक्त
पदरक्षे ! त्वयि रङ्गिणः कदाचित् ।
किमपि स्थितमद्वितीयमाल्यं
विरलावस्थितमौक्तिकं स्मरामि ॥ ३

254 असहायगृहीतरङ्गनाथा-
मवरोधाङ्गणसीम्नि पादुके ! त्वाम् ।
सुदृशस्स्वयमर्चयन्ति दूरा-
द्ववतंसोत्पलवासितैरपाङ्गैः ॥ ४

255 निर्विश्यमानमपि नूतनसन्निवेशं
कैवल्यकल्पितविभूषणकायकान्तिम् ।
कालेषु निर्विशसि रङ्गयुवानमेका
शृङ्गारनित्यरसिकं मणिपादरक्षे ! ॥ ५

256 निद्रायितस्य कमितुर्मणिपादुके ! त्वं
पर्यङ्किकापरिसरं प्रतिपद्यमाना ।
श्वासानिलप्रचलितेन भजस्यभीक्ष्णं
नाभीसरोजरजसा नवमङ्गरागम् ॥ ६

257 शयितवति रजन्यां पादुके ! रङ्गबन्धौ
चरणकमलपार्श्वे सादरं वर्तसे त्वम् ।
फणिपतिशयनीयादुत्थितस्य प्रभाते
प्रथमनयनपातं पावनं प्राप्तुकामा ॥ ७

258 चरणकमलसङ्गाद्रङ्गनाथस्य नित्यं
निगमपरिमलं त्वं पादुके ! निर्वमन्ती ।
नियतमतिशयाना वर्तसे सावरोध-
हृदयमधिवसन्तीं मालिकां वैजयन्तीम् ॥ ८

259 उपनिषदबलाभिर्नित्यमुत्तंसनीयं
किमपि जलधिकन्याहस्तसंवाहनार्हम् ।
तव तु चरणरक्षे देवि ! लीलारविन्दं
चरणसरसिजं तच्चारु चाणूरहन्तुः ॥ ९

260 अखिलान्तःपुरवारे-

प्वनेकवारं पदावनि ! स्वैरम् ।

अनुभवति रङ्गनाथो

विहारविक्रान्तिसहचरीं भवतीम् ॥ १०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

शृङ्गारपद्धतिः दशमी ॥

श्रीः ॥

# एकादशी सञ्चारपद्धतिः ॥

---

261 अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ।
इति सीतापि यद्वृत्तिमियेष प्रणमामि ताम् ॥

262 शरदश्शतमम्ब पादुके ! स्यां
समयाहूतपितामहस्तुतानि ।
मणिमण्टपिकासु रङ्गभर्तु-
स्त्वदधीनानि गतागतानि पश्यन् ॥ २

263 त्वदधीनपरिक्रमो मुकुन्द-
स्तदधीनस्तव पादुके ! विहारः ।
इतरेतरपारतन्त्र्यमित्थं
युवयोस्सिद्धमनन्यतन्त्रभूम्नोः ॥ ३

264 रजसा तमसा च दुष्टसत्त्वे
गहने चेतसि मामके मुकुन्दः ।
उचितं मृगयाविहारमिच्छन्
भवतीमाद्रियत पादुके ! पदाभ्याम् ॥ ४

265 क्षमया जगतामपि त्रयाणा-
मवने देवि पदावनि ! त्वयैव ।
अभिगम्यतमोऽपि संश्रिताना-
मभिगन्ता भवति स्वयं मुकुन्दः ॥ ५

266 शिरसा भवतीं दधाति कश्चि-
च्छिधून कोपि पदस्पृशा भवन्त्या ।
उभयोर्मधुवैरिपादरक्षे !
त्वदधीनां गतिमामनन्ति सन्तः ॥ ६

267 स्पृशतश्शिरसा पदेन च त्वां
गतिमुद्दिश्य मुकुन्दपादुके ! द्वौ ।
अवरोहति पश्चिमः पदात् स्वा-
दधिरोहत्यनघस्तदेव पूर्वः ॥ ७

268 समयेष्वपदिश्य जैत्रयात्रां
विविधान्तःपुरवागुराव्यतीतः ।
नियतं मणिपादुके ! भवत्या
रमते वर्त्मनि रङ्गसार्वभौमः ॥ ८

269 निजसंहननप्रसक्तलास्यं
चरति त्वामधिरुह्य रङ्गनाथः ।
पदरक्षिणि ! पावनत्वमास्तां
रसिकास्वादमतः परं न विद्मः ॥ ९

270 पद्योरनयोः परस्य पुंस-
स्तदनुग्रह्यविहारपद्धतेर्वा ।
शिरसो मणिपादुके ! श्रुतीनां
मनसो वा मम भूषणं त्वमेका ॥ १०

271 कृपया मधुवैरिपादरक्षे !
कठिने चेतसि मामके विहर्तुम् ।
मकुटेषु दिवौकसां विधत्ते
भवती रत्नविसंस्थुलेषु योग्याम् ॥ ११

272 चरणद्वयमर्भकस्य शौरे-
श्शरदम्भोरुहचातुरीधुरीणम् ।
शकटासुरताडनेऽपि गुप्तं
तव शक्त्या किल पादुके ! तदासीत् ॥ १२

273 उत्तस्थुषो रङ्गशयस्य शेषा-
दास्थानसिंहासनमारुरुक्षोः ।
मध्येनिशान्तं मणिपादुके ! त्वां
लीलापदन्यासखीं प्रपद्ये ॥ १३

274 प्राप्ताधिकाराः पतयः प्रजाना-
मुत्तंसितामुत्तमपादुके ! त्वाम् ।
रङ्गेशितुस्स्वैरविहारकाले
संयोजयन्त्यङ्घ्रिसरोजयुग्मे ॥ १४

275 त्वयानुबद्धां मणिपादरक्षे !
लीलागतिं रङ्गशयस्य पुंसः ।
निशामयन्तो न पुनर्भजन्ते
संसारकान्तारगतागतानि ॥ ६५

276 व्यूहानुपूर्वीरुचिरान् विहारान्
पदक्रमेण प्रतिपद्यमाना ।
बिभर्षि नित्यं मणिपादुके ! त्वं
मुरद्विषो मूर्तिरिव त्रिलोकीम् ॥ ६६

277 पदेषु मन्देषु महत्स्वपि त्वं
नीरन्ध्रसंश्लेषवती मुरारेः ।
प्रत्यायनार्थं किल पादुके ! नः
स्वाभाविकं दर्शयसि प्रभावम् ॥ ६७

278 कृपाविशेषात्क्षमया समेतां
प्रवर्तमानां जगतो विभूत्यै ।
अवैमि नित्यं मणिपादुके ! त्वा-
माकस्मिकीं रङ्गपतेः प्रसत्तिम् ॥ ६८

279 उपागतानामुपतापशान्त्यै
सुखावगाहां गतिमुद्वहन्तीम् ।
पश्यामि शौरेः पदवाहिनीं त्वां
निम्नेषु तुङ्गेषु च निर्विशेषाम् ॥ ६९

280 सहप्रयाता सततं प्रयाणे
प्राप्तासने संश्रितपादपीठा ।
अलङ्घनीया सहजेन भूम्ना
छायेव शौरेर्मणिपादुके ! त्वम् ॥ २०

281 पदस्पृशा रङ्गपतिर्भवत्या
विचक्रमे विश्वमिदं क्षणेन ।
तदस्य मन्ये मणिपादरक्षे !
त्वयैव विख्यातपुरुक्रमत्वम् ॥ २१

282 सञ्चारयन्ती पदमन्वतिष्ठ-
स्ससहायकृत्यं मणिपादरक्षे ! ।
मातस्त्वमेका मनुवंशगोप्तु-
र्गोपायतो गौतमधर्मदारान् ॥ २२

283 त्वत्तस्त्रिविष्टपचरानसपत्नयिष्य-
न्नारुह्य तार्क्ष्यमवरुह्य च तत्क्षणेन ।
शुद्धान्तभूमिषु पुनर्मणिपादरक्षे !
विश्राम्यति त्वयि विहारवशेन शौरिः ॥ २३

284 विक्रम्य भूमिमखिलां बलिना प्रदिष्टां
देवे पदावनि ! दिवं परिमातुकामे ।
आसीदतो दिनकरस्य करोपतापात्
संरक्षितुं पदसरोजमुपर्यभूस्त्वम् ॥ २४

285 त्वत्सङ्गमान्ननु सकृद्विधिसंप्रयुक्ता
शुद्धिं परामधिजगाम शिवत्वहेतुम् ।
रङ्गाधिराजपदरक्षिणि ! कीदृशी सा
गङ्गा बभूव भवदीयगतागतेन ॥ २५

286 वृद्धिं गवां जनयितुं भजता विहारान्
कृष्णेन रङ्गरसिकेन कृताश्रयायाः ।
सञ्चारतस्तव तदा मणिपादरक्षे !
बृन्दावनं सपदि नन्दनतुल्यमासीत् ॥ २६

287 मातस्त्रयीमयतया चरणप्रमाणे
द्वे विक्रमेषु विविधेषु सहायभूते ।
नाथस्य साधुपरिरक्षणकर्मणि त्वं
दुष्कृद्विनाशनदशासु विहङ्गराजः ॥ २७

288 पादावनि ! क्वचन विक्रमणे भुजानां
पञ्चायुधीकररुहैर्भजते विकल्पम् ।
नित्यं त्वमेव नियता पदयोर्मुरारेः
तेनासि नूनमविकल्पसमाधियोग्या ॥ २८

289 अक्षेत्रविद्भिरधिगन्तुमशक्यवृत्तिः
मातस्त्वया निरवधिर्निधिरप्रमेयः ।
रथ्यान्तरेषु चरणावनि ! रङ्गसङ्गी
वात्सल्यनिघ्नमनसा जनसात्कृतोऽसौ ॥ २९

290 संपद्यते समुचितं क्रममाश्रयन्त्या
सद्वर्त्मना भगवतोऽपि गतिर्भवत्या ॥
ईष्टे पदावनि ! पुनः क इवेतरेषां
व्यावर्तनस्य विषमादपथप्रचारात् ॥ ३०

291 रङ्गेश्वरेण सह लास्यविशेषभाजो
लीलोचितेषु नवरत्नशिलातलेषु ।
मध्ये स्थितानि कतिचिन्मणिपादरक्षे !
सभ्यान्विशेषमनुयोक्तुमिति प्रतीमः ॥ ३१

292 नित्यं पदावनि ! निवेश्य पदं भवत्यां
निस्पन्दकल्पपरिमेयपरिच्छदानि ।
शृङ्गारशीतलतराणि भवन्ति काले
रङ्गेश्वरस्य ललितानि गतागतानि ॥ ३२

293 भोगार्चनानि कृतिभिः परिकल्पितानि
प्रीत्यैव रङ्गनृपतिः प्रतिपद्यमानः ।
पश्यत्सु नित्यमितरेषु परिच्छदेषु
प्रत्यासनं भजति काञ्चनपादुके ! त्वाम् ॥ ३३

294 अन्तस्तृतीयनयनैः स्वयमुत्तमाङ्गैः
आविर्भविष्यदतिरिक्तमुखांबुजैर्वा ।
न्यस्यन्ति रङ्गरसिकस्य विहारकाले
वारक्रमेण कृतिनो मणिपादुके ! त्वाम् ॥ ३४

295 रङ्गेश्वरे समधिरूढविहङ्गराजे
मातङ्गराजविधृतां मणिपादुके ! त्वाम् ।
अन्वासते निधृतचारुसितातपत्राः
स्वर्गौकसस्सुभगचामरलोलहस्ताः ॥ ३५

296 विष्णोः पदं गतिवशादपरित्यजन्तीं
लोकेषु नित्यविषमेषु समप्रचाराम् ।
अन्वेतुमर्हति धृतामखिलैस्सुरेन्द्रैः
गङ्गा कथं नु गरुडध्वजपादुके ! त्वाम् ॥ ३६

297 भिक्षामपेक्ष्य दनुजेन्द्रगृहं प्रयातुः
गुप्त्यै गवां विहरतो वहतश्च दूत्यम् ।
तत्तादृशानि चरणावनि ! रङ्गभर्तुः
त्वत्सङ्गमेन सुभगानि विचेष्टितानि ॥ ३७

298 निर्व्यज्यमाननवताललयप्रथिम्ना
निर्यन्त्रणेन निजसञ्चरणक्रमेण ।
मृद्नासि रङ्गनृपतेर्मणिपादुके ! त्वं
दुःखात्मकान् प्रणमतां दुरितप्ररोहान् ॥ ३८

299 नित्यं य एव जगतो मणिपादरक्षे !
सत्तास्थितिप्रयतनेषु परं निदानम् ।
सोऽपि स्वतन्त्रचरितस्त्वदधीनवृत्तिः
का वा कथा तदितरेषु मितंपचेषु ॥ ३९

300 निर्विघ्ननागशयनेन परेण पुंसा
न्यस्ते पदे त्वयि पदावनि ! लोकहेतोः ।
स्वर्गौकसां त्वदनुधावनतत्पराणां
सद्यः पदानि विपदामपदं भवन्ति ॥ ४०

301 शरदुपगमकाले सन्त्यजन्योगनिद्रां
शरणमुपगतानां त्राणहेतोः प्रयास्यन् ।
जलधिदुहितुरङ्कान्मन्दमादाय देवि !
त्वयि खलु निदधाति स्वं पदं रङ्गनाथः ॥ ४१

302 स्पृशसि पदसरोजं पादुके ! निर्विघातं
प्रविशसि च समस्तां देवि ! शुद्धान्तकक्ष्याम् ।
अपरमपि मुरारेः पूर्वमाभीरकन्या-
स्वभिसरणविधीनामग्रिमा साक्षिणी त्वम् ॥ ४२

303 प्रतिभवनमनङ्गे पादुके ! त्वत्प्रभावात्
विविधवपुषि देवे विभ्रमद्यूतकाले ।
अभिलषितसपत्नीगेहयात्राविघातं
ग्लहयति रहसि त्वां षोडशस्त्रीसहस्रम् ॥ ४३

304 तटभुवि यमुनायाश्छन्नवृत्तौ मुकुन्दे
मुहुरधिगमहेतोर्मुह्यतां यौवतानाम् ।
शमयितुमलमासीच्छङ्खचक्रादिचिह्ना
प्रतिपदविचिकित्सां पादुके ! पद्धतिस्ते ॥ ४४

305 अधिगतबहुशाखान्मञ्जुवाचश्शुकादीन्
सरसिजनिलयायाः प्रीतये संग्रहीतुम् ।
प्रकटितगुणजालं पादुके ! रङ्गबन्धो-
रुपनिपदटवीषु क्रीडितं त्वत्सनाथम् ॥ ४५

306 मुनिपरिषदि गीतं गौतमीरक्षणं ते
मुहुरनुकलयन्तो मञ्जुवाचश्शकुन्ताः ।
उषसि निजकुलायादुत्थिता दण्डकेषु
स्वयमपि पदरक्षे ! स्वैरमाम्रेडयन्ति ॥ ४६

307 यमनियमविशुद्धैर्यन्न पश्यन्ति चित्तैः
श्रुतिषु चुलकमात्रं दृश्यते यस्य भूमा ।
सुलभनिखिलभावं मांसदृष्टेर्जनस्य
स्वयमुपहरसि त्वं पादुके ! तं पुमांसम् ॥ ४७

308 निधिमिव निरपायं त्वामनादृत्य मोहात्
अहमिव मम दोषं भावयन् क्षुद्रमर्थम् ।
मयि सति करुणायाः पूर्णपात्रे त्वया किं
परमुपगमनीयः पादुके ! रङ्गनाथः ॥ ४८

309 कमपि कनकसिन्धोस्सैकते सञ्चरन्तं
कलशजलधिकन्यामेदिनीदत्तहस्तम् ।
अनिशमनुभवेयं पादुके ! त्वय्यधीनं
सुचरितपरिपाकं सूरिभिस्सेवनीयम् ॥ ४९

310 परिसरमुपयाता पादुके! पश्य मातः!
करणविलयखेदात् कान्दिशीके विवेके ।
पुरुषमुपनयन्ती पुण्डरीकाक्षमग्रे
पुनरुदरनिवासक्लेशविच्छेदनं नः ॥ ५०

311 सा मे भूयात्सपदि भवती पादुके! तापशान्त्यै
यामारूढो दिवमिव शुभैस्सेव्यमानो मरुद्भिः ।
सौदामन्या सह कमलया सह्यजावृद्धिहेतुः
काले काले चरति करुणावर्षुकः कृष्णमेघः ॥ ५१

312 सत्याल्लोकात्सकलमहितात् स्थानतो वा रघूणां
शङ्के मातस्समधिकगुणं सैकतं सह्यजायाः ।
पूर्वं पूर्वं चिरपरिचितं पादुके! यत्त्यजन्त्या
नीतो नाथस्तदिदमितरन्नीयते न त्वयासौ ॥ ५२

313 अग्रे देवि! त्वयि सुमनसामग्रिमैरन्तरङ्गैः
विन्यस्तायां विनयगरिमावर्जितादुत्तमाङ्गात् ।
दत्ते पादं दरमुकुलितं त्वत्प्रभावातिशङ्की
देवश्श्रीमान् दनुजमथनो जैत्रयात्रास्वनन्यः ॥ ५३

314 पौरोदन्तान् परिकलयितुं पादुके! सञ्चरिष्णोः
व्यक्ताव्यक्ता वशिकविशिखावर्तनी रङ्गभर्तुः ।
वेलातीतश्रुतिपरिमलैर्व्यक्तिमभ्येति काल्ये
विन्यासैस्ते विबुधपरिषन्मौलिविन्यासदघ्नैः ॥ ५४

315 आसंस्कारात् द्विजपरिषदा नित्यमभ्यस्यमाना
श्रेयोहेतुश्शिरसि जगतः स्थायिनीं स्वेन भूम्ना ।
रङ्गाधीशे स्वयमुदयिनि क्षेप्तुमन्धंतमिस्रं
गायत्रीव त्रिचतुरपदा गण्यसे पादुके ! त्वम् ॥ ५५

316 भवतीं परस्य पुरुषस्य रङ्गिणो
महिमानमेव मणिपादु ! मन्महे ।
कथमन्यथा स्वमहिमप्रतिष्ठितः
प्रतितिष्ठति त्वयि पदात्पदं प्रभुः ॥ ५६

317 तिथिरष्टमी यदवतारवैभवात्
प्रथमा तिथिस्त्रिजगतामजायत ।
मणिपादुके ! तमुपनीय वीथिका-
स्वतिथीकरोषि तदनन्यचक्षुषाम् ॥ ५७

318 अपारप्रख्यातेरशरणशरण्यत्वयशसा
ननु त्वं रङ्गेन्दोश्चरणकमलस्यापि शरणम् ।
यया लभ्यः पङ्गुप्रभृतिभिरसौ रङ्गनगर-
प्रतोलीपर्यन्ते निधिरनघवाचां निरवधिः ॥ ५८

319 तत्तद्दासगृहाङ्गणप्रणयिनश्श्रीरङ्गशृङ्गारिणो
वाल्लभ्यादविभक्तमन्थरगतिस्त्वं मे गतिः पादुके ! ।
लीलापङ्कजहल्लकोत्पलगलन्माध्वीकसेकोत्थिता
यत्रामोदविकल्पना विवृणुते शुद्धान्तवारक्रमम् ॥ ५९

320 संभवतु पादरक्षे ! सत्यसुपर्णादिरौपवाह्यगणः ।
यात्रासु रङ्गभर्तुः प्रथमपरिस्पन्दकारणं भवती ॥ ६०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

एकादशी सञ्चारपद्धतिः ॥

७

श्रीः ॥

## पुष्पपद्धतिर्द्वादशी ॥

321 शौरेस्सञ्चारकालेषु पुष्पवृष्टिर्दिवश्च्युता ।
पर्यवस्यति यत्रैव प्रपद्ये तां पदावनीम् ॥ १

322 दैवतं मम जगत्त्रयार्चिता
दिव्यदंपतिविहारपादुका ।
पाणिपादकमलार्पणात्तयो-
र्या भजत्यनुदिनं समाजनम् ॥ २

323 तव रङ्गराजमणिपादु ! नतो
विहितार्हणस्सुरसरित्पयसा ।
अवतंसचन्द्रकलया गिरिशो
नवकेतकीदलमिवार्पयति ॥ ३

324 कुसुमेषु समर्पितेषु भक्त्या
स्त्वयि रङ्गेशपदावनि ! प्रतीमः ।
शठकोपमुनेस्त्वदेकनाम्न-
स्सुभगं यत्सुरभित्वमस्य नित्यम् ॥ ४

325 पदे परस्मिन् भुवने क्रियालुः
पुष्पैः प्रसूनैः पुलिने सरय्वाः ।
मध्ये च पादावनि! सह्यसिन्धो-
रासीच्चतुस्स्थानमिवार्चनं ते ॥ ५

326 तवैव रङ्गेश्वरपादरक्षे!
सौभाग्यमव्याहतमाप्तुकामाः ।
सुरद्रुमाणां प्रसवैस्सुजातै-
रभ्यर्चयन्त्यप्सरसो मुहुस्त्वाम् ॥ ६

327 निवेशितां रङ्गपतेः पदाब्जे
मन्ये सपर्यां मणिपादरक्षे! ।
त्वदर्पणादापतितामपश्य-
द्गाण्डीवधन्वा गिरिशोत्तमाङ्गे ॥ ७

328 पत्राणि रङ्गनृपतेर्मणिपादरक्षे!
द्वित्राण्यपि त्वयि समर्प्य विभूतिकामाः ।
पर्यायलब्धपुरुहूतपदाश्शचीनां
पत्राङ्कुराणि विलिखन्ति पयोधरेषु ॥ ८

329 निर्वर्तयन्ति तव ये निचितानि पुष्पै-
र्वैहारिकाण्युपवनानि वसुंधरायाम् ।
कालेन ते कमललोचनपादरक्षे!
क्रीडन्ति नन्दनवने कृतिनः पुमांसः ॥ ९

330 अर्चन्ति ये मधुभिदो मणिपादरक्षे !
भावात्मकैरपि परं भवतीं प्रसूनैः ।
मन्दारदामसुभगैर्मकुटैरजस्रं
वृन्दारकास्सुरभयन्ति पदं तदीयम् ॥ २०

331 अस्पृष्टदोषपरिमर्शमलङ्घ्यमन्यै-
र्हस्तापचेयमखिलं पुरुषार्थवर्गम् ।
चित्र जनार्दनपदावनि ! साधकानां
त्वय्यर्पितास्सुमनसस्सहसा फलन्ति ॥ २१

332 वन्दारुभिस्सुरगणैस्त्वयि संप्रयुक्ता
माला विभाति मधुसूदनपादरक्षे ! ।
विक्रान्तविष्णुपदसंश्रयवद्धसख्या
भागीरथीव परिरंभणकाङ्क्षिणी ते ॥ २२

333 नाथेम रङ्गनृपतेर्मणिपादुके ! त्वां
अभ्यर्चयन्ति कमलैरधिकर्तुकामाः ।
आरोपयत्यवहिता नियतिः क्रमात्तान्
कल्पान्तरीयकमलासनपत्रिकासु ॥ २३

334 त्वय्यर्पितानि मनुजैर्मणिपादरक्षे !
दूर्वाङ्कुराणि सुलभान्यथवा तुलस्यः ।
साराधिकास्सपदि रङ्गनरेन्द्रशक्त्या
संसारनागदमनौषधयो भवन्ति ॥ २४

335 आराध्य नूनमसुरार्दनपादुके! त्वा-
मामुष्मिकाय विभवाय सहस्रपत्रैः ।
मन्वन्तरेषु परिवर्तिषु देवि! मर्त्याः
पर्यायतः परिणमन्ति सहस्रनेत्राः ॥ १५

336 धन्यैस्त्वयि त्रिदशरक्षकपादरक्षे!
पुष्पाणि काञ्चनमयानि समर्पितानि ।
विस्रंसिना विनमतो गिरिशोत्तमाङ्गा-
दारग्वधेन मिलितान्यपृथग्भवन्ति ॥ १६

337 विश्वोपसर्गशमनं त्वयि मन्यमानैः
वैमानिकैः प्रणिहितं मणिपादरक्षे! ।
पद्मासहायपदपद्मनखार्चिषस्ते
पुष्पोपहारविभवं पुनरुक्तयन्ति ॥ १७

338 नाकौकसां शमयितुं परिपन्थिवर्गान्
नाथे पदं त्वयि निवेशयितुं प्रवृत्ते ।
त्वत्संश्रितां विजहतस्तुलसीं वमन्ति
प्रस्थानकाहलरवान् प्रथमं द्विरेफाः ॥ १८

339 रङ्गेशपादपरिभोगसुजातगन्धां
संप्राप्य देवि! भवतीं सह दिव्यपुष्पैः ।
नित्योपदर्शितरसं न किलाद्रियन्ते
नाभीसरोजमपि नन्दनचञ्चरीकाः ॥ १९

310 प्रागेव काञ्चनपद्मावनि ! पुष्पवर्षात्
संवर्तिते शमितदैत्यभयैस्सुरेन्द्रैः ।
पद्मेक्षणस्य पदपद्मनिवेशलाभे
पुष्पाभिषेकमुचितं प्रतिपद्यसे त्वम् ॥ २०

311 दिशि दिशि मुनिपत्न्यो दण्डकारण्यभागे
न जहति बहुमानान्नूनमद्यापि मूलम् ।
रघुपतिपदरक्षे ! त्वत्परिष्कारहेतोः
अपचितकुसुमानामाश्रमानोकहानाम् ॥ २१

312 त्वय्यपि परिपूर्णान् कृष्णमेघप्रचारे
कृतिभिरुपहृतस्त्वं केतकीगर्भपत्रैः ।
रघुतनुपरिणामाद्धामतश्श्यामलानां
प्रणतिसमयलग्नान् पादुके ! मौलिचन्द्रान् ॥ २२

313 परिचरणनियुक्तः पादुके रङ्गभर्तुः
पवनतनयमुख्यैरर्पितां त्वत्समीपे ।
विनतविधिमुखेभ्यो निर्विशेषां द्विरेफाः
कथमपि विभजन्ते काञ्चनीं पद्मपङ्क्तिम् ॥ २३

314 विधिशिवपुरुहूतस्पर्शितैर्दिव्यपुष्पैः
त्वयि सह निपतन्तस्तत्तदुद्यानभृङ्गाः ।
मधुरिपुपदरक्षे ! मञ्जुभिस्स्वैर्निनादै-
रविदितपरमार्थान्नूनमध्यापयन्ति ॥ २४

345 प्रशमयति जनानां संज्वरं रङ्गभर्तुः
परिसरचलितानां पादुके ! चामराणाम् ।
अनुदिनमुपयातैरुत्थितं दिव्यपुष्पै-
र्निगमपरिमलं ते निर्विशन् गन्धवाहः ॥ २५

346 अखिलभुवनरक्षानाटिकां दर्शयिष्यन्
अनिमिषतरुपुष्पैरर्चिते रङ्गमध्ये ।
अभिनयमनुरूपं शिक्षयन्त्यात्मना त्वां
प्रथमविहितलास्यः पादुके ! रङ्गनाथः ॥ २६

347 अगलितनिजरागं देवि ! विष्णोः पदं तत्
त्रिभुवनमहनीयां प्राप्य सन्ध्यामिव त्वाम् ।
भवति विबुधमुक्तैस्स्पष्टतारानुषङ्गं
परिसरपतितैस्ते पारिजातप्रसूनैः ॥ २७

348 व्यञ्जन्त्येते विभवमनघं रञ्जयन्तश्श्रुतीर्नः
प्राप्तं रङ्गक्षितिपतिपदं पादुके ! धारयन्त्याः ।
नादैरन्तर्निहितनिगमैर्नन्दनोद्यानभृङ्गाः
दिव्यैः पुष्पैस्स्नापितवपुषो देवि ! सौस्नातिकास्ते ॥ २८

349 किं पुष्पैस्तुलसीदलैरपि कृतं दूर्वापि दूरे स्थिता
त्वत्पूजासु मुकुन्दपादु ! कृपया त्वं कामधेनुस्समताम् ।
प्रत्यग्राहृतदर्भपल्लवलवग्रासाभिलाषोन्मुखी
धेनुस्तिष्ठतु वा वसिष्ठभवनद्वारोपकण्ठस्थले ॥ २९

350 चूडारग्वधरजसा
चूर्णस्नपनं विधाय ते पूर्वम् ।
रङ्गेशपादुके ! त्वा-
मभिषिञ्चति मौलिगङ्गया शंभुः ॥ ३०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**द्वादशी पुष्पपद्धतिः ॥**

श्री ॥

# त्रयोदशी परागपद्धतिः ॥

---

351 पान्तु वः पद्मनाभस्य पादुकाकेलिपांसवः ।
अहल्यादेहनिर्माणपर्यायपरमाणवः ॥ १

352 तव सञ्चरणाद्रजो विधूतं
यदिदं रङ्गनरेन्द्रपादरक्षे ! ।
अलमेतदनाविलानि कर्तुं
कतकक्षोद इवाशु मानसानि ॥ २

353 पुनरुक्तपितामहानुभावाः
पुरुषाः केचिदमी पुनन्ति विश्वम् ।
मधुवैरिपदारविन्दबन्धो-
रपरागास्तव पादुके ! परागैः ॥ ३

354 अभियुक्तजनो निजार्भकाणां
बहुशो रङ्गनरेन्द्रपादरक्षे ! ।
अवलेपपिशाचमोचनार्थं
रजसा लिम्पति तावकेन देहान् ॥ ४

355 शिरसा परिगृह्य लोकपाला-
स्तव रङ्गेश्वरपादुके! रजांसि ।
विषमेषु बलेषु दानवानां
व्यपनीतान्यशिरस्त्रमाविशन्ति ॥ ५

356 कतिनाश्शिरसा समुद्वहन्तः
कतिचित् केशवपादुके! रजस्ते ।
रजसस्तमसोऽपि दूरभूतं
परिपश्यन्ति विशुद्धमेव सत्त्वम् ॥ ६

357 अधिकं पदमाश्रितोऽपि वेधा
प्रणतो रङ्गधुरीणपादरक्षे! ।
अभिवाञ्छति सङ्गमं परागै-
रभिजातैस्तव देवि! नाभिजातः ॥ ७

358 शुद्धसत्त्ववपुषैव भवत्या
पादुके! विरजसौ हरिपादौ ।
अस्तु किं पुनरिदं रजसा ते
शुद्धसत्त्वमयता मनुजानाम् ॥ ८

359 तद्रजस्तव तनोति पादुके!
मानसान्यकठिनानि देहिनाम् ।
प्रस्तरस्य पदवीगतस्य य-
श्चाचकार मुनिधर्मदारताम् ।

360 रङ्गेशयस्य पुरुषस्य जगद्विभूत्यै
रथ्यापरिक्रमविधौ मणिपादरक्षे ! ।
सीमन्तदेशमनवद्यसरस्वतीनां
सिन्दूरयन्ति भवतीचलिताः परागाः ॥ १०

361 मान्येन रङ्गनृपतेर्मणिपादरक्षे !
चूडापदानि रजसा तव भूषयन्तः ।
कालक्रमेण भजतां कमलासनत्वं
नाभीसरोजरजसां निवसन्ति मध्ये ॥ ११

362 मातर्मुकुन्दचरणावनि ! तावकीना-
श्चिन्तावशीकरणचूर्णविशेषकल्पाः ।
सञ्चारपांसुकणिकाश्शिरसा वहन्तो
विश्वं पुनन्ति पदपद्मपरागलेशैः ॥ १२

363 आयोजितान्यमलधीभिरनन्यलभ्ये
पादावनि ! श्रुतिवधूपटवासकृत्ये ।
त्वत्सञ्चरप्रचलितानि रजांसि शौरेः
प्रख्यापयन्ति पदपद्मपरागशोभाम् ॥ १३

364 मूर्धानमम्ब ! मुरभिन्मणिपादरक्षे !
येषां कदापि रजसा भवती पुनाति ।
त्वामेव ते सुकृतिनस्स्नपयन्ति काले
मन्दारदामरजसा मकुटच्युतेन ॥ १४

365 रथ्याविहाररजसा परिधूसराङ्गीं
रङ्गेश्वरस्य ललितेषु महोत्सवेषु ।
प्रस्फोटयत्यवनतो मणिपादुके ! त्वां
गौरीपतिस्स्वयमिभाजिनपल्लवेन ॥ १५

366 नेदीयसां निजपरागनिवेशपूर्वं
स्पृष्ट्वा शिरांसि भवती भवरोगभाजाम् ।
गाढं निपीड्य गरुडध्वजपादरक्षे!
मानग्रहं शमयतीव परैरसाध्यम् ॥ १६

367 आपातवल्लवतनोरकुमारयूनः
पादावनि ! प्रविशतो यमुनानिकुञ्जान् ।
आसीदनङ्गसमरात्पुरतः प्रवृत्त-
स्सेनापराग इव ते पदवीपरागः ॥ १७

368 गङ्गापगालवलतागृहमाश्रयन्त्याः
पादावनि ! प्रचलितं पदवीरजस्ते ।
प्रायेण पावनतमं प्रणतस्य शंभो-
रुद्धूलनं किमपि नूतनमातनोति ॥ १८

369 अन्ते तदा त्वमविलंबितमानयन्ती
रङ्गाङ्कजङ्गशयनं मणिपादरक्षे ! ।
कामं निवर्तयितुमर्हसि संज्वरं मे
कर्पूरचूर्णपटलैरिव धूलिभिस्ते ॥ १९

370 रङ्गेशपादसहधर्मचरि ! त्वदीयान्
मौलौ निवेश्य महितान्पदवीपरागान् ।
सन्तस्त्रिवर्गपदवीमतिलङ्घयन्तो
मौलौ पदं विदधते विबुधेश्वराणाम् ॥ २०

371 मातस्तदा माधवपादरक्षे !
त्वयि प्रसक्तं त्वरयोपयान्त्याम् ।
परामृशेयं पदवीपरागं
प्राणैः प्रयाणाय समुज्जिहानैः ॥ २१

372 तथा गता राघवपादरक्षे !
संपश्यमानेषु तपोधनेषु ।
आसीदहल्या तव पांसुलेशै-
रपांसुलानां स्वयमग्रगण्या ॥ २२

373 पश्यामि पद्मेक्षणपादरक्षे !
भवांबुधिं पातुमिव प्रवृत्तान् ।
भक्तोपयानत्वरया भवत्याः
पर्यस्यमानान् पदवीपरागान् ॥ २३

374 पञ्चायुधीभूषणमेव शौरेः
यतस्तवैते मणिपादरक्षे ! ।
वितन्वते व्याप्तदिशः परागाः
शान्तोदयाञ्शत्रुचमूपरागान् ॥ २४

375 परिणतिगकठोरं प्राप्तया यत्प्रभावा-
दलभत शिलया स्वान् गौतमो धर्मदारान् ।
पुनरुपजनिशङ्कावारकं पादुके! तत्
प्रशमयति रजस्ते रागयोगं प्रजानाम् ॥ २५

376 रजनिविगमकाले रामगाथाः पठन्तः
कुशिकतनयमुख्याः पादुके! भावयन्ते ।
उपलशकलसक्तैस्त्वत्परागैरकाण्डे
जनितमुनिकलत्रान् दण्डकारण्यभागान् ॥ २६

377 शुभसरणिरजोभिश्शोभयन्ती धरित्रीं
परिणतिरमणीयान् प्रक्षरन्ती पुमर्थान् ।
भवसि भुवनवन्द्या पादुके! रङ्गभर्तुः
शरणमुपगतानां शाश्वती कामधेनुः ॥ २७

378 पवनतरलितस्ते पादुके! रङ्गभर्तु-
र्विहरणसमयेषु व्याप्तविश्वः परागः ।
विषमविषयवर्त्मव्याकुलानामजस्रं
व्यपनयति जनानां वासनारेणुजालम् ॥ २८

379 निष्प्रत्यूहमुपास्पीमहि मुहुर्निश्शेषदोषच्छिदो
नित्यं रङ्गधुरंधरस्य निगमस्तोमार्चिते पादुके ।
धत्ते मूर्धभिरादिपद्मजनिता तत्तादृशी सन्ततिः
यत्सञ्चारपवित्रितक्षितिरजःपङ्क्तिं चतुष्पञ्चषैः ॥ २९

30 रजसा परोरजस्त-
न्न खलु न लङ्घ्येत भगवतोऽपि पदम् ।
किमुत हृदयं मदीयं
भवती यदि नाम पादुके! न स्यात् ॥ ६०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**परागपद्धतिस्त्रयोदशी ॥**

श्री. ॥

## नादपद्धतिश्चतुर्दशी ॥

---

381 श्रुतीनां भूषणानां ते शङ्के रङ्गेन्द्रपादुके ! ।
मिथस्सङ्घर्षसञ्जातं रजः क्रिमपि शिञ्जितम् ॥ १

382 मुरभिन्मणिपादुके ! भवत्याः
स्तुतिमाकर्णयतां मया निबद्धाम् ।
अवधीरयसीव मञ्जुनादै-
श्चमत्कारवचांसि दुर्जनानाम् ॥ २

383 विहितेष्वभिवादनेषु वेदैः
गमनोदीरितगर्भरत्ननादा ।
मधुरं मधुवैरिपादरक्षे !
भवती प्रत्यभिवादनं विधत्ते ॥ ३

384 स्वदते किमिहैव रङ्गनाथः
मयि तिष्ठन् यदि वा पदे परस्मिन् ।
इति पृच्छसि देवि नूनमस्मान्
मधुरैस्त्वं मणिपादुके ! निनादैः ॥ ४

385 अवरोधगतस्य रङ्गभर्तुः
गतिषु व्यञ्जितगर्भरत्ननादा ।
प्रतिमल्लयसीव पादुके! त्वं
कमलानूपुरमञ्जुशिञ्जितानाम् ॥ ५

386 सुरभिच्चरणारविन्दरूपं
महितानन्दमवाप्य पूरुषार्थम् ।
अनघैर्मणिपादुके! निनादै-
रहमन्नाद इतीव गायसि त्वम् ॥ ६

387 मधुवैरिपदाम्बुजं भजन्ती
मणिपादावनि! मञ्जुशिञ्जितेन ।
पठसीव मुहुस्स्वयं प्रजाना-
मपरोपज्ञमरिष्टशान्तिमन्त्रम् ॥ ७

388 श्रुतिभिः परमं पदं मुरारे-
रनिदङ्कारमनेवमित्युपात्तम् ।
इदमित्थमिति ब्रवीषि नूनं
मणिपादावनि! मञ्जुभिः प्रणादैः ॥ ८

389 मुनयः प्रणिधानसन्निरुद्धे
हृदि रङ्गेश्वररत्नपादुके! त्वाम् ।
विनिवेश्य विभावयन्त्यनन्याः
प्रणवस्य प्रणिधिं तव प्रणादम् ॥ ९

390 मधुर मणिपादुके ! प्रवृत्ते
भवती रङ्गपतेर्विहारकाले ।
अभयार्थनया समभ्युपेता-
नविसंवादयतीव मञ्जुनादैः ॥ १०

391 श्रवसोर्मम पारणां दिशन्ती
मणिपादावनि ! मञ्जुलैः प्रणादैः ।
रमया क्षमया च दत्तहस्तं
समये रङ्गधुरीणमानयेथाः ॥ ११

392 अनुयाति नित्यममृतात्मिकां कलां
तव रङ्गचन्द्रमणिपादु ! झङ्कृतम् ।
श्रवसा मुखेन परिभुज्य यत् क्षणा-
दजरामरत्वमुपयान्ति साधवः ॥ १२

393 परुषैरजस्रमसतामनर्थकैः
परिवादपैशुनविकत्थनादिभिः ।
मधुकैटभारिमणिपादुके ! मम
श्रुतिदुष्कृतानि विनिवारय स्वनैः ॥ १३

394 पादुके ! परिजनस्य दूरत-
स्सूचयन्ति खलु तावकास्स्वनाः ।
लीलया भुजगतल्पमुज्झतः
श्रीमतस्त्रिचतुरान्पदक्रमान् ॥ १४

395 देवि दैत्यदमनाय सत्वरं
प्रस्थितस्य मणिपादुके ! प्रभोः ।
विश्वमङ्गलविशेषसूचकं
शाकुनं भवति तावकं रुतम् ॥ १५

396 दातुमर्हसि तदा मम श्रुतौ
देवि रङ्गपतिरत्नपादुके ! ।
विह्वलस्य भवदीयशिञ्जितं
स्वादुकर्णरसनारसायनम् ॥ १६

397 अहमुपरि समस्तदेवताना-
मुपरि ममैष विभाति वासुदेवः ।
तदिह परतरं न किञ्चिदस्मा-
दिति वदसीव पदावनि ! प्रणादैः ॥ १७

398 अवनतविबुधेन्द्रमौलिमाला-
मधुमदशिक्षितमन्थरप्रयाता ।
प्रथयसि परिरब्धशौरिपादा
मणिकलहेन वियातजल्पितानि ॥ १८

399 आस्थानेषु त्रिदशमहितान् वर्तयित्वा विहारान्
स्थाने स्थाने निजपरिजनं वारयित्वा यथार्हम् ।
वासागारं स्वयमुपसरन् पादुके ! मञ्जुनादा-
मापर्यङ्कान्न खलु भवतीं रङ्गनाथो जहाति ॥ १९

400 अन्तर्लग्नैर्मणिभिरुदितं पादुके! रङ्गबन्धो
मन्दं मन्दं निहितचरणे मञ्जुलं ते निनादम् ।
पश्यन्त्यादिक्रमपरिणते: प्राक्तनीं तां परायाः
मन्ये मित्रावरुणविषयादुच्चरन्तीमवस्थाम् ॥

401 प्रख्यातानां परिषदि सतां कारयित्वा प्रतिज्ञां
प्रायेण त्वां प्रथितविभवां वर्णयन्ती मया त्वम् ।
पादन्यासक्रममनुगुणं प्राप्य रङ्गाधिराजात्
पद्यारम्भान् गणयसि परं पादुके! स्वैर्निनादैः ॥

402 विष्णोरस्मिन् पदपरसिजे वृत्तिभेदैर्विचित्रै-
रैदंपर्यं निगमवचसामेककण्ठ्येन सिद्धम् ।
इत्थं पुंसामनिपुणधियां पादुके! त्वं तदेव
स्पृष्ट्वा सत्यं वदसि नियतं मञ्जुना शिञ्जितेन ॥

403 आम्नायैस्त्वामनितरपरैस्स्तोतुमभ्युद्यतानां
मध्ये भक्त्या मधुविजयिनः पादुके! मोहभाजाम् ।
शिक्षातत्त्वस्खलितवचसां शिक्षयस्येव पुंसां
मात्रादीनि स्वयमनुपदं मञ्जुभिस्स्वैर्निनादैः ॥

404 लक्ष्मीकान्तं कमपि तरुणं रथ्यया निष्पतन्तं
रागात् द्रष्टुं त्वरितमनसां राजधानीवधूनाम् ।
प्रत्यादेशं भजति मधुरैः पादुके! शिञ्जितैस्ते
चेतोहारी कुसुमधनुषश्शिञ्जिनीमञ्जुनादः ॥

405 रङ्गाधीशे सह कमलया सादरं यायजूकैः
सारं दिव्यं सदनहविषां भोक्तुमाहूयमाने ।
नेदीयोभिर्निगमवचसां नित्यमंहःप्रतीपैः
प्रत्यालापं दिशति भवती पादुके ! शिञ्जितैस्स्वैः ॥ २५

२०

406 उपास्य नूनं मणिपादुके ! त्वां
रङ्गेशपादाम्बुजराजहंसीम् ।
पत्युः प्रजानामलभन्त पूर्वं
मञ्जुस्वनं वाहनराजहंसाः ॥ २६

२१

407 अनादिमायारजनीवशेन
प्रस्वापभाजां प्रतिबोधनार्हाम् ।
पश्यामि नित्योदितवासरस्य
प्रभातनान्दीमिव पादुके ! त्वाम् ॥ २७

२२

408 शृणोतु रङ्गाधिपतिः प्रजाना-
मार्तध्वनिं क्वापि समुज्जिहानम् ।
इतीव मत्वा मणिपादुके ! त्वं
मन्दप्रचारैर्मृदुशिञ्जितासि ॥ २८

२३

409 अन्ते ममार्तिं शमयिष्यतस्ता-
मग्रेसराण्यापततो मुरारेः ।
श्रमोपपन्नश्शृणुयां भवत्याः
शीतानि पादावनि ! शिञ्जितानि ॥ २९

२४

410 स्वादूनि रङ्गेश्वरपादरक्षे !
श्रोत्रैः पिबन्तस्तव शिञ्जितानि ।
पचन्त्यविद्योपचितानशेषा-
नन्तर्गतानात्मविदः कषायान् ॥ ३०

411 अवैमि रङ्गाधिपतेस्सकाशा-
दवेक्षमाणेषु जनेषु रक्षाम् ।
उदारनादां मणिपादुके ! त्वाम्
ओमित्यनुज्ञाक्षरमुद्गिरन्तीम् ॥ ३१

412 मधुद्विषस्स्वैरविहारहेतुः
मञ्जुस्वनान् शिक्षयसीव मातः ।
पर्यन्तभाजो मणिपादरक्षे !
पद्माधरण्योर्मणिनूपुराणि ॥ ३२

413 प्रास्थानिकेषु समयेषु समागतेषु
प्राप्ता पदं परिचितं द्विजपुङ्गवेन ।
पुष्णासि रङ्गनृपतेर्मणिपादुके ! त्वं
पुण्याहघोषमिव गर्भमणिरणद्भिः ॥ ३३

414 आर्तध्वनेरुचितमुत्तरमन्तकाले
कर्णेषु मञ्जुनिनदेन करिष्यसीति ।
वासं भजन्ति कृतिनो मणिपादरक्षे !
पुण्येषु देवि पुलिनेषु मरुद्वृधायाः ॥ ३४

415 नृत्ये बलेर्विमथने शकटस्य भङ्गे
यात्रोत्सवेषु च विभोः प्रतिपन्नसख्या ।
गीतायितानि विरुदोपहितानि नूनं
मञ्जुस्वनैः प्रथयसे मणिपादुके ! त्वम् ॥ ३५

416 स्तोतुं प्रवृत्तमपि मां निगमस्तुतां त्वां
व्यासज्यमानकरणं विषयेष्वजस्रम् ।
अन्तर्मणिध्वनिभिरच्युतपादुके ! त्वं
संबोधयस्यनुकलं सहजानुकम्पा ॥ ३६

417 देवस्य दानवरिपोर्मणिपादरक्षे !
प्रस्थानमङ्गलविधौ प्रतिपन्ननादाम् ।
मा भैष्ट साधव इति स्वयमालपन्तीं
जाने जगत्त्रितयरक्षणदीक्षितां त्वाम् ॥ ३७

418 स्वच्छन्दविभ्रमगतौ मणिपादुके ! त्वं
पादारविन्दमधिगम्य परस्य पुंसः ।
जातस्वना प्रतिपदं जपसीव सूक्तं
विद्रावणं किमपि वैरिवरूथिनीनाम् ॥ ३८

419 रक्षार्थमाश्रितजनस्य समुज्जिहाने
रङ्गेश्वरे शरदि शेषभुजङ्गतल्पात् ।
नादास्तव श्रुतिसुखा मणिपादरक्षे !
प्रस्थानशङ्खनिनदात् प्रथमे भवन्ति ॥ ३९

420 नित्यं पदाम्बुरुहयोरिह गोपिकां त्वां
गोपीजनप्रियतमो मणिपादरक्षे! ।
संपन्नघोषविभवां गतिभिर्निजाभिः
प्रीत्येव न त्यजति रङ्गसमाश्रितोऽपि ॥ ४०

421 प्रायः पदावनि! विभोः प्रणतार्तिहन्तुः
प्रस्थानमङ्गलविधौ प्रथमोद्यतानि ।
त्वच्छिञ्जितानि सपदि स्वयमारभन्ते
कालोचितान् कनककाहलशङ्खनादान् ॥ ४१

422 आम्रेडितश्रुतिगणैर्निनदैर्मणीना-
माम्नायवेद्यमनुभावमभङ्गुरं ते ।
उद्भास्यतां नियतमिच्छसि सामगानां
गानप्रदानमिव शौरिपदावनि! त्वम् ॥ ४२

423 रथ्यासु रङ्गनृपतेर्मणिपादरक्षे!
त्वद्गर्भरत्नजनितो मधुरः प्रणादः ।
संदर्शनोत्सुकधियां पुरसुन्दरीणां
संपद्यते श्रवणमोहनमन्त्रघोषः ॥ ४३

424 आकस्मिकेषु समयेष्वपवार्य भृत्या-
नन्तःपुरं विशति रङ्गपतौ सलीलम् ।
व्यामोहनेन भवती सुदृशामधीते
मञ्जुस्वनेन मदनोपनिषद्रहस्यम् ॥ ४४

425 यात्राविहारसमयेषु समुत्थितं ते
रङ्गाधिपस्य चरणावनि! मञ्जुनादम् ।
पर्याकुलेन्द्रियमृगग्रहणाय पुंसां
संमोहनं शबरगीतमिव प्रतीमः ॥ ४५

426 प्रायेण सह्यदुहितुर्नदराजकन्या
जामातुरागमनसूचनमीहमाना ।
मञ्जुप्रणादसुभगैर्मणिपादुके! त्वा-
मन्तर्युतामकृत यौतकरत्नखण्डैः ॥ ४६

427 नित्यं विहारसमये निगमानुयातै-
र्विक्षेपताण्डवितगर्भमणिप्रसूतैः ।
नादैस्स्वयं नरकमर्दनपादरक्षे!
नादावसाननिलयं वदसीव नाथम् ॥ ४७

428 साधारणेषु युवयोर्मणिपादरक्षे!
देवस्य दानवरिपोस्त्रिषु विक्रमेषु ।
अद्यापि शिञ्जितमिषादनुवर्तमानं
न्यूनाधिकत्वविषयं कलहं प्रतीमः ॥ ४८

429 प्रायः पदावनि! विभोः प्रणयापराधे
मानग्रहं शमयितुं महिषीजनानाम् ।
उच्चारयन्ति निनदैस्तव गर्भरत्ना-
न्युद्धातमक्षरमुपाश्रयभारतीनाम् ॥ ४९

430 अन्तश्चरेषु पवनेषु जितेष्वभिज्ञाः
प्रत्यङ्मुखीं परिणमय्य मनःप्रवृत्तिम् ।
आस्वादयन्ति सरसं मणिपादरक्षे!
नादावसानसमये भवतीनिनादम् ॥ ५०

431 दाक्षिण्यमत्र नियतं नियता सुधास्मि-
न्नित्युद्गतो नियतमच्युतपादरक्षे! ।
प्रत्येकसंश्रितपदस्तुतये भवत्यां-
स्सद्भूतवाद इव मञ्जुमणिप्रणादः ॥ ५१

432 सञ्चारकेलिकलहायितमर्मरत्वा
सांसिद्धिकं सकलजन्तुषु सार्वभौमम् ।
रक्षार्थिनां प्रथयसीव पदावनि! त्वं
रङ्गेश्वरस्य निरवग्रहमानृशंस्यम् ॥ ५२

433 प्राप्तुं परं पुरिशयं पुरुषं मुनीना-
मभ्यस्यतामनुदिनं प्रणवं त्रिमात्रम् ।
श्रीरङ्गराजचरणावनि! शिञ्जितं ते
शङ्के समुन्नयनसामविशेषघोषम् ॥ ५३

434 नित्यं समाहितधियामुपदर्शयन्ती
नागेशयं किमपि धाम निजोर्ध्वभागे ।
हृत्कर्णिकामनुगता मणिपादुके! त्वं
मञ्जुस्वना स्फुरसि वाग्भ्रमरी परेव ॥ ५४

435 मानेषु दानवरिपोर्मणिपादरक्षे !
त्वामाश्रितेषु निगमेष्ववधीरितेषु ।
मञ्जुस्वनैर्वदसि सेवमितीव मात-
र्वेलां लिलङ्घयिषतो मनुजान्निरोद्धुम् ॥ ५५

436 क्रन्दत्सु कातरतया करणव्यपाये
रङ्गोपशल्यशयितेषु जनेष्वलक्ष्यम् ।
आसीदसि त्वरितमस्खलितानुकम्पा
मातेव मञ्जुनिनदा मणिपादुके ! त्वम् ॥ ५६

437 भास्वत्सुवर्णवपुषां मणिपादरक्षे !
पद्मासहायपदपद्मविभूषणानाम् ।
मञ्जीरशिञ्जितविकल्पितमञ्जुनादा
मञ्जूषिकेव भवती निगमान्तवाचाम् ॥ ५७

438 रङ्गेशपादकमलात्त्वदधीनवृत्ते-
रन्येषु केषुचिदलक्ष्यमनन्यवेद्यम् ।
आम्नायगूढमबहिर्मणिभिः क्वणद्भिः
नेदीयसां प्रथयसीव निजानुभावम् ॥ ५८

439 कालोपपन्नकरणात्ययनिर्विचेष्टे
जातश्रमे मयि जनार्दनपादरक्षे ! ।
आश्वासनाय पुरतः प्रसरन्तु मात-
र्वार्ताहरास्तव रवाश्शमितार्तयो मे ॥ ५९

440 संरक्षणाय समये जगतां त्रयाणां
यात्रासु रङ्गनृपतेरुपतस्थुषीषु ।
संपत्स्यते श्रुतिसुखैर्मणिपादरक्षे
मङ्गल्यसूक्तिरनघा तव मञ्जुनादैः ॥ ६०

441 गर्भो रत्नैर्गमनवेगवशाद्विलोलै-
र्वाचालिता मधुभिदो मणिपादुके ! त्वम् ।
प्रस्तौषि भावितधियां पथि देवयाने
प्रस्थानमङ्गलमृदङ्गविशेषघोषम् ॥ ६१

442 पर्यङ्कमाश्रितवतो मणिपादुके ! त्वं
पादं विहाय परिकल्पितमौनमुद्रा ।
श्रोतुं प्रभोरवसरं दिशसीव मात-
र्नाभीसरोजशयिनार्भकसामगीतिम् ॥ ६२

443 भोगाय देवि भवती मणिपादरक्षे !
पद्मासहायमधिरोप्य भुजङ्गतल्पे ।
विश्वस्य गुप्तिमधिकृत्य विहारहीना
वाचंयमा किमपि चिन्तयतीव कार्यम् ॥ ६३

444 नित्यप्रबोधसुभगे पुरुषे परस्मिन्
निद्रामुपेयुषि तदेकविहारशीला ।
मञ्जुस्वनं विजहती मणिपादुके ! त्वं
संवेशमिच्छसि परं चरणान्तिकस्था ॥ ६४

445 लास्यं विहाय किमपि स्थितमाश्रयन्ती
रङ्गेश्वरेण सहिता मणिमण्टपेषु ।
मञ्जुस्वनेषु विरतेष्वपि विश्वमेत-
न्मौनेन हन्त भवती मुखरीकरोति ॥ ६५

446 विस्मापितेव भवती मणिपादरक्षे!
वैरोचनेर्वितरणेन तथाविधेन ।
एतावतालमिति देवि गृहीतपादा
नाथं त्रिविक्रममवारयतेव नादैः ॥ ६६

447 सामानि रङ्गनृपतिस्सरसं च गीतं
लीलागनेषु विनिवारयति स्वतन्त्रः ।
श्रोतुं तव श्रुतिसुखानि विशेषवेदी
मञ्जूनि काञ्चनपदावनि! शिञ्जितानि ॥ ६७

448 नत्तादर्शीं प्रथयता रुचिरां स्वरेखां
वर्णाधिकेन मधुसूदनपादरक्षे!।
पश्यन्ति चित्तनिकषे विनिवेश्य सन्तो
मञ्जुस्वनेन तव नैगमिकं सुवर्णम् ॥ ६८

449 मुग्धस्य हन्त भवतीं स्तुवतो ममैता-
न्याकर्ण्य नूनमयथायथजल्पितानि ।
इत्थं वद त्वमिति शिक्षयितुं प्रणादा-
न्मञ्जुनुदीरयसि माधवपादुके! त्वम् ॥ ६९

450 आदौ सहस्रमिति यत्सहसा मयोक्तं
तुष्यता निरवधि महिमार्णवं ते ।
आम्रेडयस्यथ किमेतदमृष्यमाणा
मञ्जुस्वनेन मधुजिन्मणिपादुके ! त्वम् ॥ ७०

451 परिमितपरिबर्हे पादुके ! सञ्चरिष्णौ
त्वयि विनिहितपादे लीलया रङ्गनाथे ।
नियमयति विपञ्चीं नित्यमेकान्तसेवी
निशमयितुमुदारान्नारदस्ते निनादान् ॥ ७१

452 विहरति विशिखायां रङ्गनाथे सलील
गमनवशविलोलैर्गर्भरत्नैः क्वणन्त्याः ।
मणिवलयनिनादैर्मञ्जुलैस्ते दिशन्ति
प्रतिवचनमुदारं पादुके ! पौरनार्यः ॥ ७२

453 अनुकृतसवनीयस्तोत्रशस्त्रां निनादैः
अनुगतनिगमां त्वामास्थितो रङ्गनाथः ।
अनितरविबुधार्हं हव्यमास्वादयिष्यन्
विशति चरणरक्षे ! यज्ञवाटं द्विजानाम् ॥ ७३

454 चरणकमलमेतद्रङ्गनाथस्य नित्यं
शरणमिति जनानां दर्शयन्ती यथावत् ।
प्रतिपदमपि हृद्यं पादुके ! स्वादुभावा-
दनुवदति परं ते नादमाम्नायपङ्क्तिः ॥ ७४

455 रहितभुजगतल्पे त्वत्सनाथे प्रजानां
प्रतिभयशमनाय प्रस्थिते रङ्गनाथे ।
प्रथममुदयमानः पादुके! तूर्यघोषात्
प्रतिफलति निनादः पाञ्चजन्ये त्वदीयः ॥ ७५

456 बकुलधरतनुस्त्वं संहितां यामपश्य-
श्श्रुतिपरिषदि तस्यास्सौरभं योजयन्ति ।
हरिचरणसरोजामोदसंमोदितायाः
प्रतिपदरमणीयाः पादुके! ते निनादाः ॥ ७६

457 दनुतनयनिहन्तुर्जैत्रयात्रानुकूले
शरदुपगमकाले सह्यजामापतन्ति ।
श्रुतिमधुरमुदारं शिक्षितुं ते निनादं
परिहृतनिजत्रासाः पादुके! राजहंसाः ॥ ७७

458 विहरणसमयेषु प्रत्यहं रङ्गभर्तु-
श्चरणनखमयूखैस्सोत्तरीया विशुद्धैः ।
परिणमयसि नादं पादुके! गर्भरत्नै-
र्दमयितुमिव शिष्यान् दीर्घिकाराजहंसान् ॥ ७८

459 परिषदि विरतायां पादुके! रङ्गभर्तुः
परिजनमपवार्य प्रस्तिथस्यावरोधान् ।
मणिनिकरसमुद्यन्मञ्जुनादापदेशा-
दभिलपसि यथार्हं नूनमालोकशब्दम् ॥ ७९

460 गुरुजननियतं तद्गोपिकानां सहस्रं
दिनकरतनयायास्सैकते दिव्यगोपः ।
वशमनयद्यत्नाद्वंशनादानुयातै-
स्तव खलु पदरक्षे ! तादृशैर्मञ्जुनादैः ॥ ८०

461 निजपदविनिवेशान्निर्विशेषप्रचारा-
न्परिणमयति भक्तान्रङ्गनाथो यथा माम् ।
इति विहरणकाले मञ्जुशिञ्जाविशेषै-
र्हितमुपदिशसीव प्राणिनां पादुके ! त्वम् ॥ ८१

462 अयमयमिति तैस्तैः कल्पितानध्वभेदान्
प्रतिपदमवलोक्य प्राणिनां व्याकुलानाम् ।
चटुलमणिकलापैश्शौरिपादावनि ! त्वं
मुखरयसि विहारैर्मुक्तिघण्टापथाग्र्यम् ॥ ८२

463 पदकमलमुदारं दर्शयन्ती मुरारेः
कलमधुरनिनादा गर्भरत्नैर्विलोलैः ।
विषमविषयतृष्णाव्याकुलानि प्रजाना-
मभिमुखयसि नूनं पादुके ! मानसानि ॥ ८३

464 मधुरिपुपदरक्षे ! मन्दबुद्धौ मयि त्वा-
मनवधिमहिमानं त्वत्प्रसादात् स्तुवाने ।
मणिनिकरसमुत्थैर्मञ्जुनादैः कवीना-
मुपरमयसि तांस्तान्नूनमुत्सेकवादान् ॥ ८४

465 शरणमुपगते त्वां शार्ङ्गिणः पादरक्षे!
सकृदिति विधिसिद्धं त्यक्तुकामे विमोहात् ।
प्रचलितमणिजालव्यञ्जितैश्शिञ्जितैः स्वै-
रलमलमिति नूनं वारयस्यादरेण ॥ ८५

466 विफलकरणवृत्तौ विह्वलाङ्गे विलक्षं
विलपति मयि मोहाद्विभ्रती शौरिपादम् ।
परिसरमधिगन्तुं पश्य पादावनि! त्वं
प्रतिभयमखिलं मे भर्त्सयन्ती निनादैः ॥ ८६

467 करणविगमकाले कालहुङ्कारशङ्की
द्रुतपदमुपगच्छन् दत्तहस्तः प्रियाभ्याम् ।
परिणमयतु कर्णे रङ्गनाथस्स्वयं नः
प्रणवमिव भवत्याः पादुके! मञ्जुनादम् ॥ ८७

468 कमलवनसखीं तां कौमुदीमुद्वहन्तं
सविधमुपनयन्ती तादृशं रङ्गचन्द्रम् ।
प्रलयदिनसमुत्थान्पादुके! मामकीनान्
प्रशमय परितापान् शीतलैश्शिञ्जितैस्स्वैः ॥ ८८

469 प्रशमयतु भयं नः पश्चिमश्वासकाले
रहसि विहरणं ते रङ्गनाथेन सार्धम् ।
नियतमनुविधत्ते पादुके! यन्निनादो
निखिलभुवनरक्षाघोषणाघोषलीलाम् ॥ ८९

470 त्रिकविनिहितहस्तं चिन्तयित्वा कृतान्तं
गतवति हृदि मोहं गच्छता जीवितेन ।
परिकलयतु बोधं पादुके! शिञ्जितं ते
त्वरयितुमिव रुग्णं त्वद्विधेयं मुकुन्दम् ॥ २०

471 उपघ्नं संवित्तेरुपनिषदुपोद्धानवचनं
तव श्रावंश्रावं श्रुतिसुभगमन्तर्मणिरवम् ।
विजृम्भन्ते नूनं मधुमथनपादावनि! मम
द्रवीभूतद्राक्षामधुरिमधुरीणाः फणितयः ॥ २१

472 विलासैः क्रीणन्तो निखिलजनचेतांसि विविधा
विहारास्ते रङ्गक्षितिरमणपादावनि! मुहुः ।
विगाहन्तामन्तर्मम विलुठदन्तर्मणिशिला-
खलात्कारव्याजक्षरदमृतधाराधमनयः ॥ २२

473 श्रुतिश्रेणीस्थेयश्रुतिसुभगशिञ्जामुखरितां
भजेम त्वां पद्मारमणचरणत्रायिणि! परम् ।
न मुद्रानिद्राणद्रविणकणविश्राणनदशा-
विशालाहङ्कारं कमपि घनहुङ्कारपरुषम् ॥ २३

474 तवैतच्छ्रीरङ्गक्षितिपतिपदत्रायिणि! नृणां
भवत्यागश्चिन्तारणरणकभङ्गाय रणितम् ।
शरीरे स्वं भावं प्रथयति यदाकर्णनवशा-
न्न नः कर्णे भावी यममहिषघण्टाघणघणः ॥ २४

475 परित्रस्ताः पुण्यद्रवपतनवेगात् प्रथमतः
क्षरद्भिर्दुग्धश्रीरङ्गक्षितिरमणपादावनि! तदा ।
विरामासुर्देवा बलिमथनसंरंभमनघैः
प्रणादैस्ते सद्यः पदकमलविक्रान्तिपिशुनैः । ९५

476 स्वेषु स्वेषु पदेषु किञ्चियमयस्यष्टौ दिशामीश्वरान्
स्वैरालापकथाः प्रवर्तयसि किं त्र्य्या सहासीनया ।
रङ्गेशस्य समस्तलोकमहितं प्राप्ता पदाम्भोरुहं
मा भैषीरिति मामुदीरयसि वा मञ्जुस्वनैः पादुके! ॥ ९६

477 रङ्गे देवि रथाङ्गपाणिचरणस्वच्छन्दलीलासखि!
स्तोकस्पन्दितरम्यविभ्रमगतिप्रस्तावकं तावकम् ।
कालोपागतकालकिङ्करचमूहुङ्कारपारंपरी-
दुर्वारप्रतिवावदूकमनघं श्रोष्यामि शिञ्जारवम् ॥ ९७

478 त्वच्छिञ्जारवशर्करारससदास्वादात् सतामुन्मदा
मातर्माधवपादुके! बहुविदा प्रायश्श्रुतिर्मुह्यति ।
सारासारसकृद्विमर्शनपरिम्लानाक्षरग्रन्थिभि-
र्ग्रन्थैस्त्वामिह वर्णयाम्यहमतस्त्रासत्रपावर्जितः ॥ ९८

479 तवाम्ब किल खेलतां गतिवशेन गर्भाश्मनां
रमारमणपादुके! किमपि मञ्जुभिश्शिञ्जितैः ।
पदस्तुतिविधायिभिस्त्वदनुभावसिद्धान्तिभि-
स्सयूथ्यकलहायितं श्रुतिशतं समापद्यते ॥ ९९

480 क्षिपति मणिपादरक्षे !
नादैर्नूनं समाश्रितत्राणे ।
रङ्गेश्वरस्य भवती
रक्षापेक्षाप्रतीक्षणविलम्बम् ॥ १००

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

चतुर्दशी नादपद्धतिः ।

श्री: ॥

# रत्नसामान्यपद्धतिः पञ्चदशी ॥

---

481 उदर्चिषस्ते रङ्गेन्द्रपादावनि! बहिर्मणीन् ।
अन्तर्मणिरवं श्रुत्वा मन्ये रोमाञ्चिताकृतीन् ॥ १

482 विधेहि शौरेर्मणिपादुके! त्वं
विपद्यमाने मयि रश्मिजालैः ।
आसीदतामन्तककिङ्कराणां
वित्रासनान् वेत्रलताविशेषान् ॥ २

483 मुकुन्दपादावनि! मध्यनाड्या
मूर्धन्यया निष्पततो मुमुक्षोः ।
आब्रह्मलोकादवलम्बनार्थं
रत्नानि ते रश्मिगणं सृजन्ति ॥ ३

484 असूर्यभेद्यां रजनीं प्रजाना-
मालोकमात्रेण निवारयन्ती ।
अमोघवृत्तिर्मणिपादरक्षे!
मुरद्विषो मूर्तिमती दया त्वम् ॥ ४

485 रङ्गेशपादावनि! तावकानां
रत्नोपलानां द्युतयस्स्फुरन्ति ।
श्रेयःफलानां श्रुतिवल्लरीणा-
मुपघ्नशाखा इव निर्व्यपायाः ॥ ५

486 कस्यापि पुंसः कनकापगायाः
पुण्ये सलीलं पुलिने शयालोः ।
समीपवृत्तिर्मणिपादुके! त्वं
संवाहयन्तीव पदं करैस्स्वैः ॥ ६

487 दिदृक्षमाणस्य परं निधानं
स्नेहान्विते योगदशाविशेषे ।
संवित्प्रदीपं मणिपादरक्षे!
सन्धुक्षयन्तीव मरीचयस्ते ॥ ७

488 समाधिभाजां तनुते त्वदीया
रङ्गेशपादावनि! रत्नपङ्क्तिः ।
स्थानं प्रयातुं तमसः परं त-
त्प्रदीपकृत्यं प्रभया महत्या ॥ ८

489 बध्नासि रङ्गेश्वरपादरक्षे!
मन्ये यथार्हं मणिरश्मिजालैः ।
सेवानतानां त्रिदशेश्वराणां
शेषापटीं शेखरसन्निकृष्टाम् ॥ ९

490 भजन्ति रङ्गेश्वरपादरक्षे !
प्रकल्पयन्तो विविधान्पुमर्थान् ।
उदर्चिषश्चिन्तयतां जनानां
चिन्तामणित्वं मणयस्त्वदीयाः ॥ १०

491 नाथस्य दत्ते नदराजकन्या
पातुं शुभान् पादनखेन्दुरश्मीन् ।
मणिप्रभाभिः प्रतिपन्नपक्षां
लीलाचकोरीमिव पादुके ! त्वाम् ॥ ११

492 जनस्य रङ्गेश्वरपादुके ! त्वं
जातानुकंपा जनयस्ययत्नात् ।
आकृष्य दूरान्मणिरश्मिजालै-
रनन्यलक्ष्याणि विलोचनानि ॥ १२

493 रङ्गेशपादावनि ! तावकीनैः
स्पृष्टाः कदाचिन्मणिरश्मिपाशैः ।
कालस्य घोरं न भजन्ति भूयः
कारागृहान्तेषु कशाभिघातम् ॥ १३

494 रत्नानि रङ्गेश्वरपादरक्षे !
त्वदाश्रितान्यप्रतिघैर्मयूखैः ।
आसेदुषीणां श्रुतिसुन्दरीणां
वितन्वते वर्णनिचोललक्ष्मीम् ॥ १४

495 निद्रारसप्रणयिनो मणिपादरक्षे!
रङ्गेश्वरस्य सविधं प्रतिपद्यमाना ।
शय्याफणीन्द्रमभितो भवती विधत्ते
रत्नांशुभिर्यवनिकामिव दर्शनीयाम् ॥ ९५

496 सद्यस्त्वदुद्गहदशानमिताकृतीनां
स्रस्तांशुकं निजरुचा मणिपादुके! त्वम्
पद्मासहायपरिवारविलासिनीनां
पट्टांशुकैरिव पयोधरमावृणोषि ॥ ९६

497 देवस्य रङ्गवसतेः पुरतः प्रवृत्तै-
रुद्धूतविश्वतिमिरां मणिरश्मिजालैः ।
मन्ये मदीयहृदयायतनप्रवेश-
मङ्गल्यदीपकणिकां मणिपादुके! त्वाम् ॥ ९७

498 आकीर्णरत्ननिकरां मणिपादुके! त्वां
रङ्गेश्वरस्य ललितां विपणिं प्रतीमः ।
यत्संश्रयेण भवति स्थिरभक्तिमूल्यं
कैवल्यमत्र जगतां क्रयविक्रयार्हम् ॥ ९८

499 व्यङ्क्तुं क्षमं भगवतो जगदीश्वरत्वं
वज्राङ्कुशध्वजसरोरुहचक्रचिह्नम् ।
आश्लिष्य निर्भररुचिं मणिपादुके! त्वा-
मासीदनाभरणसुन्दरमङ्घ्रिपद्मम् ॥ ९९

500 रत्नप्रभापटलचक्रमनोहरा त्वं
पद्मारुणं पदमिदं त्वयि रङ्गभर्तुः ।
मन्ये तदेतदुभयं मणिपादरक्षे !
चक्राब्जमण्डलमकिञ्चनरक्षणार्थम् ॥ २०

501 त्रासात्स्वयं प्रणमतां दनुजेश्वराणां
सङ्ख्येऽप्यलूनशिरसामपि मौलिरत्नैः ।
आयोजयन्त्यनुकलं मणिपादुके! त्वां
सैरन्ध्रिकेव मुरवैरिकृपाणधारा ॥ २१

502 आस्कन्दनानि विबुधेन्द्रशिखामणीनां
त्वामाश्रितान्यसुरसूदनपादरक्षे ! ।
रत्नानि ते स्तुतिसुवर्णपरीक्षणार्थं
नूनं भजन्ति निकषोपलतां कवीनाम् ॥ २२

503 पादावनि ! प्रणयिनां प्रतिपादितार्थां
क्रीडासरोजमिव शौरिपदं वहन्तीम् ।
प्रत्युप्तरत्ननिकरप्रतिपन्नशोभां
पश्यामि रोहणगिरेरधिदेवतां त्वाम् ॥ २३

504 यामेव रत्नकिरणैर्मणिपादरक्षे !
चूडापदे तनुभृतां भवती विधत्ते ।
शक्रादिदैवतशिखामणिरञ्ज्यमानै-
स्तामेव ते प्रकटयन्ति पदैरभिख्याम् ॥ २४

505 रत्नाङ्कुरैरविरला मणिपादरक्षे !
पाकोन्मुखैः परिगता पुरुषार्थसस्यैः ।
देवेन रङ्गपतिना जगतां विभूत्यै
केदारिकेव कृपया परिकल्पिता त्वम् ॥ २५

506 निर्धूतमोहतिमिरास्तव रत्नदीपै-
र्निर्विश्यमानविभवं नदराजपुत्र्या ।
प्रत्यक्षयन्ति निगमान्तनिगूढमर्थं
पादावनि ! त्वयि निवेशितभावबन्धाः ॥ २६

507 रत्नोपलप्रकरसंभव एष दूरा-
द्रङ्गाधिराजचरणावनि ! तावकीनः ।
आर्द्रापराधपरिखिन्नधियां प्रजाना-
माश्वासनार्थ इव भाति करप्रसारः ॥ २७

508 व्यामुह्यतो विषयिबालमृगान्मदीया-
न्संसारघर्मजनितासु मरीचिकासु ।
पादावनि ! प्रगुणरत्नमयूखजालै-
राकृष्य विश्रमय केशवकान्तिसिन्धौ ॥ २८

509 अन्तर्निधाय मुनिभिः परिरक्ष्यमाणा-
मात्मीयरश्मिगुणितां मणिपादरक्षे ! ।
रङ्गेशपादकमलप्रतिपन्नमुद्रां
नीवीमवैमि भवतीं निगमान्तवाचाम् ॥ २९

510 गमस्य रङ्गवसतेश्चरणानुषङ्गात्
काष्ठां गतां भुवनपावनतां दधाना ।
पादावनि! प्रचुररत्नशिलानिबद्धा
संसारसन्तरणसेतुरसि प्रजानाम् ॥ ३०

511 दिविषन्मकुटेषु सञ्चरन्त्याः
प्रचुरस्ते मणिपादुके! प्रकाशः ।
दिवि रङ्गपतेर्महोत्सवार्थं
वितता वन्दनमालिकेव भाति ॥ ३१

512 प्रभवन्ति दवीयसां स्वभावा-
त्तव रत्नानि मुकुन्दपादरक्षे! ।
अयसामिव हन्त लोहकान्ताः
कठिनानां मनसां विकर्षणाय ॥ ३२

513 परिपश्यति देवि रङ्गनाथे
रहसि त्वं सविधे निविश्य लक्ष्म्याः
परिपुष्यसि रत्नधामभिस्स्वै-
रनसूयेव मनोज्ञमङ्गरागम् ॥ ३३

514 तव रत्नकरार्पितं नवीनं
परिगृह्य स्थिरमंशुकं मनोज्ञम् ।
जरदंशुकवत्सुखेन देहं
कृतिनः केशवपादुके! त्यजन्ति ॥ ३४

515 अभितो मणिपादुके! निबद्धैः
कृतसंस्कारविशेषमात्मरत्नैः ।
कुरुते भवती पदं मुरारेः
कठिनेऽस्मिन्हृदि मे निवेशयोग्यम् ॥ ३५

516 निजरत्नकराञ्चलैर्मदीया-
नपराधानवधूय दत्तसाम्या ।
रमया सहितस्य रङ्गभर्तुः
पदयोरर्पय पादुके! स्वयं माम् ॥ ३६

517 रश्मिजालपरिवेषबन्धुरा
रङ्गभूमिपतिरत्नपादुके! ।
विश्वलोचनविहङ्गहारिणी
वागुरेव वितता विराजसे ॥ ३७

518 मानसाम्बुजविकासहेतुभि-
स्सेविता मणिगणैः प्रभाकरैः ।
पादुके! वहसि सद्भिराश्रितां
देवि विष्णुपदसंपदं नवाम् ॥ ३८

519 अधिशयितफणीश्वरस्य शौरे-
स्स्वयमधिरूढपदोपधानपार्श्वा ।
मणिवलयजुषा करेण मन्दं
स्पृशसि पदावनि! पादयोर्युगं तत् ॥ ३९

520 भवन्त्यन्ते त्वां प्रणतस्य जन्तो-
स्तदोकोऽग्रज्वलनं त्वत्प्रकाशैः ।
यतो नाड्या मध्यमया विनिर्यन्
गतिं विन्देत्केशवपादरक्षे ! ॥ ४०

521 अशिथिलपरिणद्धा रश्मिजालैर्मणीनां
दुरधिगमतमं नः पारमारोपयन्ती
कमलनयनमाद्यं कर्णधारं दधाना
भवसि भवपयोधेः पादुके ! पोतपात्री ॥ ४१

522 मणिकिरणगणैस्ते कल्पिते गुल्मभेदे
मृगयुरिव कुरङ्गीं त्वां पुरस्कृत्य भव्याम् ।
हरति चरणरक्षे ! भक्तिपाशावरुद्धं
हृदयहरिणयूथं प्राणिनां रङ्गनाथः ॥ ४२

523 परिचितपदमूला पादुके ! रङ्गिणस्त्वं
प्रभवति भुजमध्ये कौस्तुभोऽयं तथापि ।
भवति भृशमधस्तात्तेजसा भव्यभूम्ना
शलभितदुरितानां तावकानां मणीनाम् ॥ ४३

524 कल्पश्रेणीदिनपरिणतौ जन्तुजाले प्रसुप्ते
विष्वग्व्याप्ते जगति तमसा पादुके ! तादृशेन ।
स्त्यानालोकैस्तव मणिगणैर्वासगेहप्रदीपा-
स्संपद्यन्ते सह कमलया जागरूकस्य यूनः ॥ ४४

525 श्रीरङ्गेन्दोश्चरणकमलद्वन्द्वसेवावलेपा-
दारूढायां त्वयि मखभुजामानतान्मौलिभागान् ।
तेषां चूडामणिभिरनघैस्तावकानां मणीनां
केशाकेशि प्रभवति मिथस्त्रासलेशोज्झितानाम् ॥ ४५

526 त्वद्रत्नोपलरश्मिपञ्जरतनुत्राणं स्थिरं बिभ्रतो
मातर्माधवपादुके ! न तु पुनर्हस्तैः स्पृशन्त्याकुलैः ।
दूरोत्सिक्तदुराढ्यजिह्मगबिलद्वाःपालकोपानल-
ज्वालामित्रकठोरवेत्रलतिकादत्तार्द्धचन्द्रं वपुः ॥ ४६

527 संवर्तोदितसूर्यकोटिसदृशीं रङ्गेशपादावनि !
प्रस्तौषि प्रतियत्नरत्ननिकरज्योतिश्छटामुद्भटाम् ।
तन्मन्ये तदनन्यसूरिपरिषन्मध्ये निवेशाय न-
स्तादृग्वासरसेऽपि भेत्स्यति चिरादस्माकमन्धंतमः ॥ ४७

528 सलीलं विन्यस्य त्वयि चरणरक्षे ! निजपदं
यदृच्छानिष्क्रान्ते विहरति हरौ रङ्गरसिके ।
दिशासौधानष्टौ जनयसि तदा निर्भरमिल-
न्मणिच्छायामायाघनघटितकेतुव्यतिकरान् ॥ ४८

529 महार्घैराश्लिष्टां मणिभिरवधूतद्युमणिभिः
कथञ्चित्क्षेत्रज्ञैरधिगतपदामम्ब भवतीम् ।
मुकुन्देन त्रातुं पदकमलमूले विनिहितां
निराबाधां मन्ये निधिमनघवाचां निरवधिम् ॥ ४९

श्री ॥

## षोडशी बहुरत्नपद्धतिः ।

531 मुखबाहूरुपादेभ्यो वर्णान् सृष्टवतः प्रभोः ।
प्रपद्ये पादुकां रत्नैर्व्यक्तवर्णव्यवस्थितिम् ॥ १

532 मणिभिः सितरक्तपीतकृष्णै-
भर्वती काञ्चनपादुके! विचित्रा ।
युगभेदविकल्पितं मुरारे-
र्युगपद्दर्शयतीव वर्णभेदम् ॥ २

533 नवरत्नविचित्रिता मुरारेः
पदयोस्त्वं मणिपादुके! विभासि ।
नवखण्डवती वसुन्धरेव
प्रणयाज्जन्मभुवं समाश्रयन्ती ॥ ३

534 सहसा विनिषेध्य सापराधान्
त्वदधीनस्वपदे मुकुन्दपादे ।
अरुणोपलसक्तमौक्तिकश्रीः
स्मयमानेव विभासि पादुके! त्वम् । ४

535 बहुरत्नसमुद्भवं मयूखं
तव मन्ये मणिपादुके! मुरारेः ।
चरणोपगतं मयूरपिञ्छं
मकुटारोहणसाहसं प्रमार्ष्टुम् ॥ ५

536 प्रभया हरिनीलमौक्तिकानां
विकसन्त्या दिशसीव पादुके! त्वम् ।
मधुभिच्चरणारविन्दलक्ष्म्याः
स्रजमिन्दीवरपुण्डरीकबद्धाम् ॥ ६

537 तव माधवपादुके! मणीनां
प्रभया देवि सितासितारुणानाम् ।
वहते गिरिशस्य मौलिगङ्गा
कुमुदेन्दीवरपद्मकाननानि ॥ ७

538 पृथग्विधानां द्युतिभिर्मणीनां
त्वां पादुके! लोहितशुक्लकृष्णाम् ।
विहारहेतोरिह रङ्गभर्तुः
पादानुषक्तां प्रकृतिं प्रतीमः ॥ ८

539 तमालनीलद्युतिमिन्द्रनीलै-
र्मुक्तानुविद्धां मणिपादुके! त्वाम् ।
अवैमि रङ्गेश्वरकान्तिसिन्धो-
र्वेलामविश्रान्तगतागतार्हाम् ॥ ९

540 अवैमि रङ्गेश्वरपादुकाभ्या-
मकालकाल्यं विभवं विधातुम् ।
वज्रेन्द्रनीलव्यपदेशदृश्यं
बन्दीकृतं नूनमहस्त्रियामम् ॥ १०

541 पदस्य गोप्त्री भवती मुरारे-
र्मणिस्पृशा मौक्तिकरत्नभासा ।
अन्तर्दृशां साञ्जनया मुनीना-
मनक्ति कर्पूरशलाकयेव ॥ ११

542 मुक्तामयूखप्रकरैस्सुभद्रा
कृष्णा महेन्द्रोपलरश्मिजालैः ।
मान्या मुरारेर्मणिपादुके! त्वं
विहारयुक्ता विजयं वृणोषि ॥ १२

543 विचित्रवर्णा मणिपादुके त्वां
छन्दोमयीं सामनिबद्धगीतिम् ।
मुनीन्द्रजुष्टां द्विपदां मुरारेः
प्रत्यायिकां काञ्चिदृचं प्रतीमः ॥ १३

544 प्रसेदुषी गोत्रभिदः प्रणामैः
पुष्णासि रङ्गेश्वरपादुके! त्वम् ।
मणिप्रभासंवलनापदेशा-
त्प्रायस्तदर्हाणि शरासनानि ॥ १४

545 शोणाश्मनां तव हरिन्मणिरश्मिभिन्नं
बालातपं बलिविमर्दनपादरक्षे ! ।
श्यामीकृतं शुकशकुन्तगणप्रवेशा-
च्छङ्के सतां किमपि शालिवनं विपक्वम् ॥ १५

546 संभिद्यमानमणिविद्रुममौक्तिकश्री-
स्सैरन्ध्रिकेव भवती मणिपादरक्षे ! ।
प्रस्तौति रङ्गनृपतेश्चरणारविन्दे
कस्तूरिकाघुसृणचन्दनपङ्कचर्चाम् ॥ १६

547 आतन्वतीमसुरमर्दनपादरक्षे !
शुद्धान्तपक्ष्मलदृशां मदनेन्द्रजालम् ।
वैहारिकीं विविधरत्नमयूखलक्ष्या-
न्मन्ये समुद्वहसि मोहनपिञ्छिकां त्वम् ॥ १७

548 रत्नैर्व्यवस्थितसितासितशोणवर्णै-
रालोकवद्भिरजहच्छ्रुतिसन्निकर्षैः ।
द्रष्टुं मुकुन्दचरणावनिमेषदृश्यौ
संदृश्यसे जननि ! संभृतनेत्रपङ्क्तिः ॥ १८

549 गारुत्मतान्तरितमौक्तिकपङ्क्तिलक्ष्या-
द्दूर्वामधूकरचितं दुरितोपशान्त्यै ।
मातः स्वयं वहसि मुग्धधियां प्रजानां
मङ्गल्यमाल्यमिव माधवपादुके ! त्वम् ॥ १९

550 रङ्गाधिराजपदरक्षिणि ! राजते ते
वज्रोपसङ्घटितमौक्तिकविद्रुमश्रीः ।
सक्ता चिरं मनसि संयमिनां निवासात्
सूर्येन्दुवह्निमयमण्डलवासनेव ॥ २०

551 आसक्तवासवशिलाशकलास्त्वदीयाः
पद्मासहायपदरक्षिणि ! पद्मरागाः ।
प्रत्यक्षयन्ति कमपि भ्रमराभिलीनं
पादारविन्दमकरन्दरसप्रवाहम् ॥ २१

552 अन्तःपुराणि समयेष्वभिगन्तुमेका
रङ्गेशितुर्ज्ञपयसीव पदावनि ! त्वम् ।
मुक्तांशुजालमिलनाद्रुचिरैः प्रवालै-
र्बिम्बाधर स्मितविशेषयुतं प्रियाणाम् ॥ २२

553 रङ्गेश्वरस्य मृगयोश्चरणावसक्तां
रक्षःकपीन्द्रमकुटेषु निवेशयोग्याम् ।
मन्ये पदावनि ! निबद्धविचित्ररत्नां
मायामृगस्य रचितामिव चर्मणा त्वाम् ॥ २३

554 बध्नासि रङ्गपतिविभ्रमपादुके ! त्वं
मायाकिरातमकुटे नवबर्हमालाम् ।
आकृष्टवासवधनुश्शकलैर्मणीना-
मन्योन्यसङ्घटितकर्बुरितैर्मयूखैः ॥ २४

555 अन्योन्यबन्धुरहरिन्मणिपद्मरागा
रङ्गेश्वरस्य चरणावनि! राजसे त्वम् ।
आत्मोपमानविभवाच्चरितार्थयन्ती
शैलात्मजागिरिशयोरिव मूर्तिमेकाम् ॥ २५

556 तापत्रयप्रशमनाय समाश्रितानां
सन्दर्शितारुणसितासितरत्नपङ्क्तिः ।
पुष्णासि रङ्गनृपतेर्मणिपादुके! त्वं
प्रायस्सरोजकुमुदोत्पलकाननानि ॥ २६

557 देहद्युतिं प्रकटयन्ति महेन्द्रनीला-
श्शौरेः पदाम्बुजरुचिं नव पद्मरागाः ।
अन्योन्यलब्धपरभागतया त्वमीषा-
माभाति कान्तिरपरा मणिपादरक्षे! ॥ २७

558 आकीर्णमौक्तिकहरिन्मणिपद्मरागा-
मम्भोजलोचनपदावनि! भावये त्वाम् ।
तत्पादविभ्रमजुषां श्रुतिसुन्दरीणां
वर्णोपधानमिव मौलिनिवेशयोग्यम् ॥ २८

559 आसन्नवासवशिलारुचिरास्त्वदीयाः
पद्मेक्षणस्य पदरक्षिणि! पद्मरागाः ।
संभावयन्ति समये क्वचिदुष्णभानो-
स्सद्यः प्रसूतयमुनासुभगामवस्थाम् ॥ २९

560 मुक्तेन्द्रनीलमणिभिर्विहिते भवत्याः
पङ्क्ती दृढे परमपूरुषपादरक्षे ! ।
मन्ये समाश्रितजनस्य तवानुभावा-
दुन्मोचिते सुकृतदुष्कृतशृङ्खले द्वे ॥ ३०

561 उद्गीर्णगाढतमसो हरिनीलभङ्गा-
स्ताराविशेषरुचिराणि च मौक्तिकानि ।
त्वत्सङ्गमात्सरसिजेक्षणपादरक्षे !
संयोजयन्ति निशया भवमौलिचन्द्रम् ॥ ३१

562 विष्णोः पदेन घटिता मणिपादुके ! त्वं
व्यक्तेन्द्रनीलरुचिरुज्ज्वलमौक्तिकश्रीः ।
कालेषु दीव्यसि मरुद्भिरुदीर्यमाणा
कादम्बिनीव परितः स्फुटवारिबिन्दुः ॥ ३२

563 भासा स्वया भगवतो मणिपादरक्षे !
मुक्तान्विता मरतकोपलपद्धतिस्ते ।
नित्यावगाहनसहं सकलस्य जन्तो-
र्गङ्गान्वितं जनयतीव समुद्रमन्यम् ॥ ३३

564 सूर्यात्मजा हरिशिलामणिपङ्क्तिलक्ष्यात्
त्वां नित्यमाश्रितवती मणिपादरक्षे ! ।
आदौ जनार्दनपदे क्षणमात्रलग्ना-
मासन्नमौक्तिकरुचा हसतीव गङ्गाम् ॥ ३४

565 पर्यन्तसङ्घटितभासुरपद्मरागाः
पद्मोदरभ्रमरकान्तिमुषस्त्वदीयाः ।
त्वत्संश्रयेण चरणावनि! शक्रनीलाः
पीताम्बरेण पुरुषेण तुला लभन्ते ॥ ३५

566 शङ्के पदावनि! सदा परिचिन्वती त्वं
रङ्गेशितुश्चरणपङ्कजसौकुमार्यम् ।
अग्रे महोभिररुणोपलमौक्तिकानां
प्राज्यां विनिक्षिपसि पल्लवपुष्पपङ्क्तिम् ॥ ३६

567 निर्गच्छता चरणरक्षिणि! नीयमाना
रङ्गेश्वरेण भवती रणदीक्षितेन ।
सूते सुरारिसुभटीनयनाम्बुजानां
ज्यौत्स्नीं निशामिव सितासितरत्नभासा ॥ ३७

568 मरतकहरिताङ्गी मेदुरा पद्मरागै-
रभिनवजलबिन्दुव्यक्तमुक्ताफलश्रीः ।
कलयसि पदरक्षे! कृष्णमेघप्रचारात्
कनकसरिदनूपे शाड्वलं सेन्द्रकोपम् ॥ ३८

569 विरचितसुरसिन्धोर्विष्णुपादारविन्दा-
त्समधिकमनुभावं पादुके! दर्शयन्ती ।
चलभिदुपलमुक्तापद्मरागप्रकाशैः
परिणमयसि नूनं प्राप्तशोणं प्रयागम् ॥ ३९

570 विविधमणिमयूखैर्व्यक्तपक्षां विचित्रैः
जलनिधिदुहितुस्त्वां वेद्मि लीलामयूरीम् ।
अनिशमतिकलानां पादुके! रङ्गभर्तु-
श्चरणनखमणीनां चन्द्रिकामापिबन्तीम् ॥ ४०

571 चरणकमलसेवासङ्गिनां रङ्गभर्तुः
विनयगरिमभाजां वर्जितैरातपत्रैः ।
पुनरपि पदरक्षे! पुष्यसि त्वं सुराणां
बहुविधमणिकान्त्या बर्हिपिञ्छातपत्रम् ॥ ४१

572 मरतकरुचिपत्रा मौक्तिकस्मेरपुष्पा
स्फुटकिसलयशोभा भासुरैः पद्मरागैः ।
फलमखिलमुदारा रङ्गनाथस्य पादे!
कलयति भवती नः कल्पवल्लीव काचित् ॥ ४२

573 बहुमणिरुचिराङ्गीं रङ्गनाथस्य पादात्
निजशिरसि गिरीशो निक्षिपन्पादुके! त्वाम् ।
स्मरति ललितमन्तर्लालनीयं भवान्याः
तरलघनकलापं षण्मुखस्यौपवाह्यम् ॥ ४३

574 विविधमणिसमुत्थैर्व्यक्तमापादयन्ती
दिवसरजनिसन्ध्यायौगपद्यं मयूखैः ।
उपनिषदुपगीतां पादुके! रङ्गिणस्त्वा-
मघटितघटनार्हां शक्तिमालोचयामः ॥ ४४

575 सकलमिदमवन्ध्ये शासने स्थापयन्ती
मुरमथनपदस्था मौक्तिकादिप्रकारा ।
प्रकटयसि विशुद्धश्यामरक्तादिरूपान्
फलपरिणतिभेदान्प्राणिनां पादुके ! त्वम् ॥ ४५

576 प्रदिशति मुदमक्ष्णोः पादुके! देहभाजां
शतमखमणिपङ्क्तिश्शार्ङ्गिणस्तुल्यवर्णा ।
परिसरनिहितैस्ते पद्मरागप्रदीपैः
घनतरपरिणद्धा कज्जलश्यामिकेव ॥ ४६

577 कलयापि हानिरहितेषु सदा
तव मौक्तिकेषु परितः प्रथते ।
उपरज्यमानहरिणाङ्कतुला
हरिपादुके! हरिशिलामहसा ॥ ४७

578 मरतकपत्रला रुचिरविद्रुमपल्लविता
पृथुतरमौक्तिकस्तबकिता निगमैस्सुरभिः ।
उपवनदेवतेव चरणावनि! रङ्गपते-
रभिलषतो विहारमभिगम्य पदं स्पृशसि ॥ ४८

579 सदोत्तुङ्गे रङ्गक्षितिरमणपादप्रणयिनि!
त्वदालोके तत्तन्मणिकिरणसंभेदकलुषे ।
प्रतिस्रोतोवृत्त्या प्रथितरुचिभेदं न सहते
नवाम्भस्स्वाच्छ्यं नमदमरकोटीरमकरः ॥ ४९

580 जनयसि पदावनि ! त्वं
मुक्ताशोणमणिशकनीलरुचा ।
नखरुचिसन्ततिरुचिरां
नन्दकनिस्त्रिंशसंपदं शौरेः ॥ ५०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

बहुरत्नपद्धतिष्षोडशी ।

श्री ॥

## सप्तदशी पद्मरागपद्धतिः ।

---

581 प्रपद्ये रङ्गनाथस्य पादुकां पद्मरागिणीम् ।
पदैकनियतां तस्य पद्मवासामिवापराम् ॥ १

582 अतिवाङ्मनसं विचिन्त्य शौरेः
पदरक्षे ! पदपद्मसौकुमार्यम् ।
परिपुष्यसि पद्मरागभासा
पदवीमाहितपल्लवामिव त्वम् ॥ २

583 पदपल्लवसन्निभिः प्रदीप्तै-
रधिकोल्लासिभिरम्ब पद्मरागैः ।
अनले शयनं क्वचिन्मुरारे-
रविसंवादयसीव पादुके ! त्वम् ॥ ३

584 विवृणोति रङ्गपतिरत्नपादुके !
त्वयि पद्मरागमणिपद्धतिश्शुभा ।
निबिडोरुसङ्कटनपीडनक्षर-
न्मधुकैटभक्षतजपङ्कवासनाम् ॥ ४

585 प्रतियन्ति रङ्गपतिपादुके! जना-
स्तव पद्मरागमणिरश्मिसन्ततिम् ।
अभिजग्मुषां त्वदनुभावखण्डिता-
दघसञ्चयाद्गलितामसृक्छटाम् ॥ ५

586 पश्यन्ति रङ्गेश्वरपादुके! त्वां
पौराङ्गनाः स्पर्शितरागबन्धाम् ।
शृङ्गारयोनेर्ज्वलनस्य दीप्तै-
रङ्गारजालैरिव पद्मरागैः ॥ ६

587 अवैमि दोषापगमस्य हेतुं
तमोपहां संभृतपद्मरागाम् ।
अशेषवन्द्यां मणिपादुके! त्वां
रङ्गेशसूर्योदयपूर्वसन्ध्याम् ॥ ७

588 अवाप्य पादावनि! रङ्गभर्तुः
पदाम्बुजे पल्लवसंस्तराभाम् ।
त्वत्पद्मरागद्युतयो भजन्ते
कालानलत्वं कलुषाम्बुधेर्नः ॥ ८

589 निसर्गसिद्धं मणिपादरक्षे!
देवस्य रङ्गावसथप्रियस्य ।
बालार्कवर्णाः पदपद्मरागं
त्वत्पद्मरागाः पुनरुक्तयन्ति ॥ ९

590 पदेन विश्वं मणिपादरक्षे!
पत्न्या समं पालयतो मुरारेः ।
दशाःपयोधौ परिकल्पयन्ति
प्रवालशोभां तव पद्मरागाः ॥ १०

591 अर्चिष्मती काञ्चनपादरक्षे!
प्रस्तौति ते पाटलरत्नपङ्क्तिः ।
रेखारथाङ्गस्य सह प्रपञ्चं
रङ्गेशपादाम्बुजमध्यभाजः ॥ ११

592 त्वय्येव पादावनि! शोणरत्नै-
र्बालातपं नूनमुदीरयन्त्या ।
पद्मापतेः पादतलप्ररूढ
रेखाम्बुजं नित्यमभूदनिद्रम् ॥ १२

593 नित्यं निजालोकपथं गतानां
श्रेयो दिशन्तीं श्रितपद्मरागाम् ।
महीयसीं माधवपादरक्षे!
मन्यामहे मङ्गलदेवतां त्वाम् ॥ १३

594 देवस्य रङ्गरसिकस्य विहारहेतो-
रात्मानमङ्घ्रिकमले विनिवेद्य पूर्वम् ।
प्रायो निवेदयसि शोणमणिप्रकाशैः
प्रत्यूषपद्मकलिकां पदरक्षिणि! त्वम् ॥ १४

595 प्रत्यङ्मयस्य हविषः प्रणवेन देवि
प्रक्षेपणाय परमार्थविदां मुनीनाम् ।
प्राज्यां मुकुन्दचरणावनि ! पद्मरागैः
पर्यायपावकशिखां भवतीं प्रतीमः ॥ १५

596 संपद्यते तव पदावनि ! पद्मरागैः
प्रस्थानमाङ्गलिकहोमहुताशनश्रीः ।
क्षीराहुतिर्भवति यत्र विकल्पगङ्गा
रङ्गेश्वरस्य रुचिरा नखरश्मिधारा ॥ १६

597 आमुञ्चतामरुणयावकपङ्कलक्ष्मीं
शोणाश्मनां तव पदावनि ! कान्तियोगात् ।
पद्मासहायपदपद्मनखाश्श्रयन्ते
सन्ध्यानुरञ्जितसुधाकरबिम्बशोभाम् ॥ १७

598 स्थाने तवाच्युतपदावनि ! पद्मरागा-
स्तेजोमयाः प्रशमयन्ति तमो मदीयम् ।
चित्रं तदेतदिह यज्जनयन्ति नित्यं
रागात्मकेन महसा रजसो निवृत्तिम् ॥ १८

599 पद्माकरान्तरविकासिनि रङ्गभर्तुः
पीत्वा पदावनि ! मधूनि पदारविन्दे ।
शोणोपलद्युतिमयीं सुभगप्रचारां
मन्ये बिभर्षि महतीं मदरागशोभाम् ॥ १९

600 पादावनि! प्रसृमरस्य कलेर्युगस्य
प्रायेण संप्रति निवारयितुं प्रवेशम् ।
श्रीरङ्गसीम्नि तव शोणमणिप्रसूतः
प्राकारमग्निमयमारभते प्रकाशः ॥ २०

601 लीलागृहान्तरविहारिणि रङ्गनाथे
लाक्षारसैररुणरत्नमयूखलक्ष्यैः ।
प्रायेण रञ्जयति पादसरोजयुग्मं
सैरन्ध्रिकेव भवती मणिपादरक्षे! ॥ २१

602 रङ्गेशितुर्विहरतो मणिपादरक्षे!
रथ्यान्तरे सुमनसः परिकीर्यमाणाः ।
त्वत्पद्मरागकिरणच्छुरणाद्भजन्ते
सन्ध्यातपान्तरिततारकपङ्क्तिलक्ष्मीम् ॥ २२

603 रङ्गाधिराजपदरक्षिणि! बिभ्रतस्त्वां
गङ्गातरङ्गविमले गिरिशस्य मौलौ ।
संवर्धयन्ति महसा तव पद्मरागा-
श्शैलात्मजाचरणयावकपङ्कलक्ष्मीम् ॥ २३

604 शरणमुपगतानां शर्वरीं मोहरूपां
शमयितुमुदयस्थान्मन्महे बालसूर्यान् ।
पदसरसिजयोगाद्रङ्गनाथस्य भूयः
परिणमदरुणिम्नः पादुके! पद्मरागान् ॥ २४

605 हरिपदरुचिराणां पादुके! तावकाना-
मरुणमणिगणानां नूनमर्धेन्दुमौलिः।
प्रणतिसमयलग्नां वासनामेव धत्ते
कलमकणिशकान्तिस्पर्धिनीभिर्जटाभिः ॥

606 प्रतिविहरणमेते पादुके! रङ्गभर्तुः
पदकमलसगन्धाः पद्मरागास्त्वदीयाः।
तरुणतपनमैत्रीमुद्वहद्भिर्मयूखैः
स्थलकमलविभूतिं स्थापयन्त्यव्यवस्थाम् ॥

607 अयमनितरभोगान् रञ्जयन्वीतरागा-
नरुणमणिगणानां तावकानां प्रकाशः।
मधुरिपुपदरक्षे! मङ्क्षु जाज्वल्यमान-
श्शलभयति जनानां शाश्वतं पापराशिम् ॥

608 प्रचुरनिगमगन्धाः पादुके! रङ्गभर्तुः
पदकमलसमृद्धिं प्रत्यह भावयन्तः।
दधति शकलयन्तो गाढमन्तस्तमिस्रं
समुचितमरुणत्वं तावकाः पद्मरागाः ॥

609 लाक्षालक्ष्मीमधररुचके रङ्गिणः पादरक्षे!
वक्त्राम्भोजे मदपरिणतिं पद्मरागद्युतिस्ते।
कर्णोपान्ते किसलयरुचिं देवि सेवानतानां
सीमन्ते च त्रिदशसुदृशां सौति सिन्दूरशोभाम् ॥

510 अरुणमणयस्तवैते
हरिपदरागेण लब्धमहिमानः ।
भ्रामयन्ति चरणरक्षे !
द्युमणिगणं ज्योतिरिङ्गणताम् ॥ ३०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

पद्मरागपद्धतिस्सप्तदशी ।

श्रीः ॥

## अष्टादशी मुक्तापद्धतिः ।

---

611 बद्धानां यत्र नित्यानां मुक्तानामीश्वरस्य च ।
प्रत्यक्षं शेषशेषित्वं सा मे सिद्ध्यतु पादुका ॥ १

612 तव रङ्गधुरीणपादरक्षे !
विमला मौक्तिकपद्धतिर्विभाति ।
सुहृदि त्वयि साश्रितापवर्गै-
स्समये संक्रमितेव साधुकृत्या ॥ २

613 शरणागतसस्यमालिनीयं
तव मुक्तामणिरश्मिनिर्झरौघैः ।
ननु रङ्गधुरीणपादरक्षे !
जगती नित्यमदेवमातृकाभूत् ॥ ३

614 अधिविष्णुपदं परिस्फुरन्ती
नवमुक्तामणिनिर्मलप्रकाशा ।
परिपुष्यसि मङ्गलानि पुंसां
प्रतिपच्चन्द्रकलेव पादुके ! त्वम् ॥ ४

615 निहिता नवमौक्तिकावलिस्त्वा-
मभितः काञ्चनपादुके! मुरारेः ।
नखचन्द्रमसां पदाश्रितानां
प्रतिमाचन्द्रपरम्परेव भाति ॥ ५

616 समतामुपैति वपुषापि सदा
भवदीयमौक्तिकमहश्छुरिता ।
हरिपादुके! हरिपदोद्भवया
कनकापगा सुरपुरापगया ॥ ६

617 तव रङ्गचन्द्रतपनीयपादुके!
विमला समुद्वहति मौक्तिकावलिः ।
चरणारविन्दनखचन्द्रमण्डल-
प्रणयोपयातनवतारकारुचिम् ॥ ७

618 चन्द्रचूडमकुटेन लालिता
चारुमौक्तिकमयूखपाण्डरा ।
रङ्गनाथपदपद्मसङ्गिनी
लक्ष्यसे सुरधुनीव पादुके! ८

619 ये भजन्ति भवतीं तवैव ते
मौक्तिकद्युतिविकल्पगङ्गया ।
वर्धयन्ति मधुवैरिपादुके!
मौलिचन्द्रशकलस्य चन्द्रिकाम् ॥ ९

620 मुक्तामयूखैर्नियतं त्वदीयै-
रापूरयिष्यन्नवतंसचन्द्रम् ।
बिभर्ति रङ्गेश्वरपादरक्षे!
देवो महान् दर्शितसन्नतिस्त्वाम् ॥ १०

621 परिष्कृता मौक्तिकरश्मिजालैः
पदस्य गोप्त्री भवती मुरारेः ।
भवत्यनेकोर्मिसमाकुलानां
पुंसां तमस्सागरपोतपात्री ॥ ११

622 रङ्गेशपादप्रतिपन्नभोगां
रत्नानुविद्धैर्महितां शिरोभिः
मुक्तावदातां मणिपादुके! त्वां
मूर्तिं भुजङ्गाधिपतेः प्रतीमः ॥ १२

623 मुकुन्दपादावनि! मौक्तिकैस्ते
ज्योत्स्नामयं विश्वमिदं दिवापि
वैमानिकानां न भजन्ति येन
व्याकोचतामञ्जलिपद्मकोशाः १३

624 समाश्रितानामनघां विशुद्धि-
त्रासव्यपायञ्च वितन्वती त्वम् ।
सायुज्यमापादयसि स्वकीयै-
र्मुक्ताफलैर्माधवपादुके! नः ॥ १४

625 अवैमि पादावनि! मौक्तिकानां
कीर्णामुदग्रैः किरणप्रवाहैः ।
यात्रोत्सवार्थं विहितां मुरारे-
रभङ्गुरामङ्कुरपालिकां त्वाम् ॥ १५

626 शिवत्वहेतुं सकलस्य जन्तोः
स्रोतोविशेषैस्सुभगामसङ्ख्यैः ।
मुक्तामयूखैस्सुरसिन्धुमन्यां
पुष्णासि रङ्गेश्वरपादुके! त्वम् ॥ १६

627 रङ्गेशयानस्य पदावनि! त्वां
लावण्यसिन्धोस्सविधे निषण्णाम् ।
परिस्फुरन्मौक्तिकजालदृश्यां
प्रसूतिभिन्नां प्रतियन्ति शुक्तिम् ॥ १७

628 अवैमि रङ्गेश्वरपादरक्षे!
मुक्ताफलानि त्वयि निस्तुलानि ।
तेनैव कल्पान्तरतारकाणा-
मुप्तानि बीजानि जगद्विधात्रा ॥ १८

629 यद्विक्रमाणमभवत्क्षणमन्तरिक्षं
मायाविना भगवतः मणिपादरक्षे! ।
व्योमापगाविपुलबुद्बुददर्शनीयै-
र्मुक्ताफलैस्तव शुभैः पुनरुक्ततारम् ॥ १९

630 लक्ष्मीविहाररसिकेन पदावनि! त्वं
रक्षाविधौ भगवता जगतो नियुक्ता ।
सत्त्वं तदर्हमिव दर्शयसि प्रभूतं
मुक्तामयूखनिकरेण विसृत्वरेण ॥ २०

631 पादार्पणेन भवतीं प्रतिपद्यमाने
श्रीरङ्गचन्द्रमसि संभृतमौक्तिकश्रीः ।
अङ्गीकरोषि चरणावनि! कान्तिमग्र्या-
मुन्निद्यमानकुमुदेव कुमुद्वती त्वम् ॥ २१

632 अग्र्यन्तहर्म्यतलवर्णसुधायितेन
ज्योत्स्नाविकल्पितरुचा मणिपादुके! त्वम् ।
मुक्तामयी मुरभिदङ्घ्रिसरोजभाजां
वर्णेन ते शमयसीव सतामवर्णम् ॥ २२

633 वैकुण्ठपादनखवासनयेव नित्यं
पादावनि! प्रसुवते तव मौक्तिकानि ।
अच्छिन्नतापशमनाय समाश्रिताना-
मालोकमण्डलमिषादमृतप्रवाहम् ॥ २३

634 रामानुवृत्तिजटिले भरतस्य मौलौ
रङ्गाधिराजपदपङ्कजरक्षिणि! त्वम् ।
एकातपत्रितजगत्त्रितयाद्वितीयं
मुक्तांशुभिः कृतवती नवमातपत्रम् ॥ २४

635 पादावनि! स्फुटमयूखमधुप्रवाहा
मुग्धा परिस्फुरति मौक्तिकपद्धतिस्ते ।
रूढस्य रङ्गपतिपादसरोजमध्ये
रेखात्मनस्सुरतरोरिव पुष्पपङ्क्तिः ॥ २५

636 आम्रेडितैः पदनखेन्दुरुचा मनोज्ञैः
मुक्तांशुभिर्मुरभिदो मणिपादुके! त्वम् ।
स्वाभाविकीं सकलजन्तुषु सार्वभौमीं
प्रायः प्रसत्तिममलां प्रकटीकरोषि ॥ २६

637 निस्सीमपङ्कमलिनं हृदयं मदीयं
नाथस्य रङ्गवसतेरधिरोढुमिच्छोः ।
स्नातस्तवैव सहसा मणिपादरक्षे!
मुक्तांशवः स्फटिकसौधतुलां नयन्ति ॥ २७

638 श्यामा तनुर्भगवतः प्रतिपन्नतारा
त्वं चन्द्रिकाविमलमौक्तिकदर्शनीया ।
स्थाने तदेतदुभयं मणिपादरक्षे!
बोधं क्षणान्नयति बुद्धिकुमुद्वतीं नः ॥ २८

639 उद्गाढपङ्कशमनैर्मणिपादरक्षे!
मुक्तांशुभिर्मुरभिदो नखरश्मिभिन्नैः ।
चूडापदेषु निहिता त्रिदशेश्वराणां
तीर्थोदकैस्स्नपयसीव पदार्थिनस्तान् ॥ २९

640 रङ्गेशपादनखचन्द्रसुधानुलेपं
संप्राप्य सिद्धगुलिका इव तावकीनाः ।
संसारसंज्वरजुषां मणिपादरक्षे !
सञ्जीवनाय जगतां प्रभवन्ति मुक्ताः ॥ ३०

641 भावोत्तरैरधिगता भरतप्रधानैः
प्रत्युप्तमौक्तिकमिषेण विकीर्णपुष्पा ।
रङ्गेश्वरस्य नियतं त्वयि लास्यभाजो-
रङ्गस्थलीव ललिता मणिपादुके ! त्वम् ॥ ३१

642 मन्ये मुकुन्दचरणावनि ! मौलिदेशे
विन्यस्य देवि भवतीं विनतस्य शम्भोः ।
आपादयन्त्यधिकृताः प्रतिपन्नतारं
चूडातुषारकिरणं तव मौक्तिकौघैः ॥ ३२

643 पद्मापतेर्विहरतः प्रियमाचरन्ती
मुक्तामयूखनिवहैः पुरतो विकीर्णैः ।
कन्दानि काञ्चनपदावनि ! पद्मिनीनां
मन्ये विनिक्षिपसि मन्दिरदीर्घिकासु ॥ ३३

644 आशास्य नूनमनघां मणिपादरक्षे !
चन्द्रस्य वारिधिसुतासहजस्य वृद्धिम् ।
धात्रीं मुकुन्दपदयोरनपायिनीं त्वां
ज्योत्स्ना समाश्रयति मौक्तिकपङ्क्तिलक्ष्यात् ॥ ३४

645 ये नाम केऽपि भवतीं विनयावनम्रै-
रुत्तंसयन्ति कृतिनः क्षणमुत्तमाङ्गैः ।
इच्छन्ति रङ्गनृपतेर्मणिपादरक्षे !
त्वन्मौक्तिकौघनियतामिह ते विशुद्धिम् ॥ ३५

646 अनुदिनललितानामङ्गलीपल्लवानां
जनितमुकुलशोभैर्देवि मुक्ताफलैस्त्वम् ।
प्रकटयसि जनानां पादुके ! रङ्गभर्तुः
पदसरसिजरेखापाञ्चजन्यप्रसूतिम् ॥ ३६

647 बलिविमथनवेलाव्यापिनस्तस्य विष्णोः
पदसरसिजमाध्वी पावनी देवि नूनम् ।
जननसमयलग्नां जाह्नवी तावकानां
वहति चरणरक्षे ! वासनां मौक्तिकानाम् ॥ ३७

648 मधुरिपुपदमित्रैर्वैरमिन्दोस्सरोजै-
श्शमयितुमिव तारास्सेवमानाश्चिरं त्वाम् ।
प्रचुरकिरणपूराः पादुके ! संश्रितानां
कलिकलुषमशेषं क्षालयन्तीव मुक्ताः ॥ ३८

649 मुकुलितपरितापां प्राणिनां मौक्तिकैस्स्वै-
रमृतमिव दुहानामाद्रिये पादुके ! त्वाम् ।
विषधरफणपङ्क्तिर्यत्प्रभावेन मन्ये
ललितनटनयोग्यं रङ्गमासीन्मुरारेः ॥ ३९

650 सकृदपि विनतानां त्रासमुन्मूलयन्तीं
त्रिभुवनमहनीयां त्वामुपाश्रित्य नूनम् ।
न जहति निजकान्तिं पादुके! रङ्गभर्तुः
चरणनखमणीनां सन्निधौ मौक्तिकानि ॥ ४०

651 भुवनमिदमशेषं बिभ्रतो रङ्गभर्तुः
पदकमलमिदं ते पादुके! धारयन्त्याः ।
चिरविहरणखेदात्संभृतानां भजन्ति
श्रमजलकणिकानां सम्पदं मौक्तिकानि ॥ ४१

652 प्रकटितयशसां ते पादुके! रङ्गभर्तु-
र्द्विगुणितनखचन्द्रज्योतिषां मौक्तिकानाम् ।
करणविलयवेलाकातरस्यास्य जन्तो-
श्शमयति परितापं शाश्वती चन्द्रिकेयम् ॥ ४२

653 दिव्यं धाम स्थिरमभियतां देवि मुक्तामणीनां
मध्ये कश्चिद्भवति मधुजित्पादुके! तावकानाम् ।
न्यस्तो नित्यं निजगुणगणव्यक्तिहेतोर्भवत्या-
मात्मज्योतिश्शमिततमसां योगिनामन्तरात्मा ॥ ४३

654 शुद्धे नित्यं स्थिरपरिणतां देवि विष्णोः पदे त्वा-
मास्थानीं तामभितविभवां पादुके! तर्कयामि ।
आलोकैस्स्वैर्भुवनमखिलं दीपवद्व्याप्य कामं
मुक्ताश्शुद्धिं यदुपसदनाद्बिभ्रति त्रासहीनाः ॥ ४४

655 प्राप्ता शौरेश्चरणकमलं पादुके! भक्तिभाजां
प्रत्यादेष्टुं किमपि वृजिनं प्रापिता मौलिभागम् ॥
दैवेन त्वं दशशतदृशा दन्तिराजस्य धत्से
मूर्ध्नि न्यस्ता मुखपटरुचिं मौक्तिकानां प्रभाभिः ॥ ४५

656 तव हरिपादुके! पृथुलमौक्तिकरत्नभुवः
प्रचलदमर्त्यसिन्धुलहरीसहधर्मचराः ।
पदमजरामरं विदधते कथमत्र सतां
प्रणतसुरेन्द्रमौलिपलितङ्कुरणाः किरणाः ॥ ४६

657 कपर्दे कस्यापि क्षितिधरपदत्रायिणि! तथा
(अटन्त्यास्स्वच्छन्दं हरिपदधरे हाटकधरे)
मुहुर्गङ्गामन्यां क्षरति तव मुक्तामणिमहः ।
मुधारंभः कुम्भस्थलमनुकलं सिञ्चति यथा
निरालम्बो लम्बोदरकलभशुण्डालचुलकः ॥ ४७

658 मुकुन्दपदरक्षिणि! प्रगुणदीप्तयस्तावकाः
क्षरन्त्यमृतनिर्झरं कमपि मौक्तिकग्रन्थयः ।
मनागपि मनीषिणो यदनुषङ्गिणस्तत्क्षणा-
ज्जरामरणदन्तुरं जहति हन्त तापत्रयम् ॥ ४८

659 देवश्श्रीपदलाक्षया तिलकितस्तिष्ठत्युपर्येव ते
गौरीपादसरोजयावकधनी मूले समालक्ष्यते ।
इत्थं जल्पति दुर्मदान्मुरभिदश्शुद्धान्तचेटीजने
प्रायस्त्वं मणिपादुके! प्रहसिता मुक्तामयूखच्छलात् ॥

660 रङ्गेशचरणरक्षा
सा मे विदधातु शाश्वतीं शुद्धिम् ।
यन्मौक्तिकप्रभाभिः
श्वेतद्वीपमिव सह्यजाद्वीपम् ॥ ५०

इति

श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

मुक्तापद्धतिरष्टादशी ।

श्रीः ॥

# एकोनविंशीमरतकपद्धतिः ।

---

661 वन्दे गारुत्मतीं वृत्त्या मणिस्तोमैश्च पादुकाम् ।
यया नित्यं तुलस्येव हरितत्वं प्रकाश्यते ॥ १

662 सविलासगतेषु रङ्गभर्तु-
स्त्वदधीनेषु बहिष्कृतो गरुत्मान् ।
अधिगच्छति निर्वृतिं कथश्चि-
न्निजरत्नैस्त्वयि पादुके ! निविष्टैः ॥ २

663 समये मणिपादुके ! मुरारेः
मुहुरन्तःपुरमुग्धचेटिकास्ते ।
हरितान् हरिदश्मनां मयूखान्
तुलसीपल्लवशङ्कया क्षिपन्ति ॥ ३

664 हरितस्सहसा हरिन्मणीनां
प्रभया रङ्गनरेन्द्रपादरक्षे ! ।
तुलसीदलसंपदं दधाति
त्वयि भक्तैर्निहितः प्रसूनराशिः ॥ ४

665 प्रसादयन्ती मणिपादुके ! त्वं
विक्षेपयोगेन विहारवेलाम् ।
हरिन्मणीना हरिकान्तिसिन्धो-
स्संदृश्यसे शैवलमञ्जरीव ॥ ५

666 वध्नासि रङ्गेश्वरपादरक्षे !
हरिन्मणीना प्रभया स्फुरन्त्या ।
चूडापदेषु श्रुतिसुन्दरीणां
मङ्गल्यदूर्वाङ्कुरमाल्यपङ्क्तिम् ॥ ६

667 अच्छेद्यरश्मिनियतैर्घटिता हरिद्भि-
स्सद्वर्त्मना गतिमती मणिपादरक्षे ! ।
संदृश्यसे सवितृमण्डलमध्यभाजो
रङ्गेश्वरस्य रथसंपदिवापरा त्वम् ॥ ७

668 श्यामायमाननिगमान्तवनोपकण्ठाः
स्थाने पदावनि ! हरिन्मणयस्त्वदीयाः ।
पर्यन्तशाद्वलवतीं प्रथयन्ति नित्यं
नारायणस्य रुचिरां नखरश्मिगङ्गाम् ॥ ८

669 उद्दिश्य कामपि गतिं मणिपादरक्षे !
रङ्गेश्वरस्य चरणे विनिवेशितात्मा ।
प्रायो हरिन्मणिरुचा दृढभक्तिबन्धा
प्रादुष्करोति भवती तुलसीवनानि ॥ ९

670 सेवार्थमागतवतां त्रिदशेश्वराणां
चूडामणिप्रकरशालिषु मौलिषु त्वम् ।
संवर्तयस्यसुरमर्दनपादरक्षे !
स्वेनाश्मगर्भमहसा शुकपङ्क्तिशोभाम् ॥ १०

671 दरपरिणतदूर्वावल्लरीनिर्विशेषै-
र्मरतकशकलानां मांसलैरंशुजालैः ।
पशुपतिविधृता त्वं तस्य पाणौ निषण्णं
मधुरिपुपदरक्षे ! वञ्चयस्येणशावम् ॥ ११

672 हरिचरणसरोजन्यासयोग्यं भवत्याः
प्रगुणमभिलषन्त्यो वर्णलाभं तुलस्यः ।
प्रतिदिनमुपहारैः पादुके ! तावकानां
मरतकशकलानामाश्रयन्ते मयूखान् ॥ १२

673 हरितमणिमयूखैरञ्चिताध्यात्मगन्धै-
र्दिशसि चरणरक्षे ! जातकौतूहला त्वम् ।
दनुजमथनलीलादारिकाणामुदारां
दमनकदलपङ्क्तिं देवि मौलौ श्रुतीनाम् ॥ १३

674 अधिगतबहुशाखैरश्मगर्भप्रसूतै-
र्मधुरिपुपदरक्षे ! मेचकैरंशुजालैः ।
अनितरशरणानां नूनमारण्यकानां
किमपि जनयसि त्वं कीचकारण्यदुर्गम् ॥ १४

675 प्रचुरनिगमशाखां पादुके ! रङ्गिणस्त्वां
चरणनखमयूखैश्चारुपुष्पानुबन्धाम् ।
मरतकदलरम्यां मन्महे सञ्चरन्तीं
कनकसरिदनूपे काञ्चिदुद्यानलक्ष्मीम् ॥

676 नखकिरणनिकायैर्नित्यमाविर्मृणाले
महितरसविशेषे मेचकैरंशुभिस्ते ।
परिकलयसि रम्यां पादुके ! रङ्गभर्तुः
पदकमलसमीपे पद्मिनीपत्रपङ्क्तिम् ॥

677 अनिमिषयुवतीनामार्तनादोपशान्त्यै
त्वयि विनिहितपादे लीलया रङ्गनाथे ।
दधति चरणरक्षे ! दैत्यसौधानि नूनं
मरतकरुचिभिस्ते मङ्क्षु दूर्वाङ्कुराणि ॥

678 विपुलतममहोभिर्वीतदोषानुषङ्गं
विलसदुपरिनैल्यं देवि विष्णोः पदं तत् ।
पृथुमरतकदृश्यां प्राप्य पादावनि ! त्वां
प्रकटयति समन्तात् संप्रयोगं हरिद्भिः ॥

679 पद्माभूम्योः प्रणयसरणिर्यत्र पर्यायहीना
यत्संसर्गादनघचरिताः पादुके ! कामचाराः ।
तारासक्तं तमिह तरुणं प्रीणयन्ते जरत्यो
नित्यश्यामास्तव मरतकैर्नूनमाम्नायवाचः ॥

## १९. मरतकपद्धतिः ।

680 स्थलकमलिनीव काचित्
चरणावनि ! भासि कमलवासिन्याः ।
यन्मरतकदलमध्ये
यः कश्चिदसौ समीक्ष्यते शौरिः ॥

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**मरतकपद्धतिरेकोनविंशी ।**

श्री ॥

# इन्द्रनीलपद्धतिः विंशी ।

---

681 हरिणा हरिनीलैश्च प्रतियत्नवतीं सदा ।
अयत्नलभ्यनिर्वाणामाश्रये मणिपादुकाम् ॥ १

682 हरिरत्नमरीचयस्तवैते
नवनीलीरसनिर्विशेषवर्णाः ।
श्रुतिमूर्धनि शौरिपादरक्षे !
पलितानुद्भवभेषजं भवन्ति ॥ २

683 अलकैरिव बिम्बितैः श्रुतीनां
हरिनीलैस्सृजसि त्वमुन्मयूखैः ।
कमलादयितस्य पादरक्षे !
करुणोदन्वति शैवलप्ररोहान् ॥ ३

684 अनघैर्हरिनीलपद्धतीनां
प्रथमानैर्मणिपादुके ! मयूखैः ।
अधरीकुरुषे रथाङ्गपाणे-
रमितामूर्ध्वमवस्थितस्य कान्तिम् ॥ ४

685 चरणावनि ! भाति सह्यकन्या
हरिनीलद्युतिभिस्तवानुविद्धा ।
वसुदेवसुतस्य रङ्गवृत्ते-
र्यमुनेव स्वयमागता समीपम् ॥ ५

686 अवधीरितदेवतान्तराणा-
मनर्घैस्त्वं मणिपादुके ! मयूखैः ।
हरिनीलसमुद्भवैर्विधत्से
हरिसारूप्यमयत्नतो जनानाम् ॥ ६

687 नेत्रेषु पुंसां तव पादरक्षे !
नीलाश्मभासा निहिताञ्जनेषु ।
श्रिया समं संश्रितरङ्गकोशो
निधिस्स्वयं व्यक्तिमुपैति नित्यम् ॥ ७

688 अभङ्गुरामच्युतपादरक्षे !
मान्यां महानीलरुचिं त्वदीयाम् ।
निश्श्रेयसद्वारकवाटिकायाः
शङ्के समुत्पा ( द्घा ) टनकुञ्चिकां नः ॥ ८

689 जीवयत्यमृतवर्षिणी प्रजा-
स्तावकी दनुजवैरिपादुके ! ।
घोरसंसरणघर्मनाशिनी
कालिकेव हरिनीलपद्धतिः ॥ ९

690 शतमखोपलभङ्गमनोहरा
विहरसे मुरमर्दनपादुके ! ।
मणिकिरीटगुणेषु दिवौकसां
मधुकरीव मनोरमपङ्क्तिषु ॥ १०

691 अन्विच्छतां किमपि तत्त्वमनन्यदृश्यं
सम्यक् प्रकाशजननी धृतकृष्णरूपा ।
पादावनि ! स्फुरसि वासवरत्नरम्या
मध्ये समाधिनयनस्य कनीनिकेव ॥ ११

692 मातस्सलीलमधिगम्य विहारवेलां
कान्तिं समुद्वहसि काञ्चनपादुके ! त्वम् ।
लक्ष्मीकटाक्षरुचिरैर्हरिनीलरत्नैः
लावण्यसिन्धुपृषतैरिव रङ्गधाम्नः ॥ १२

693 क्लृप्तावकु (गु) ण्ठनविधिर्मणिपादरक्षे !
नीलांशुकैर्नेलभिदश्मसमुद्भवैस्ते ।
संगच्छते मुनिजनस्य मतिस्समाधौ
रात्रौ समस्तजगतां रमणेन लक्ष्म्याः ॥ १३

694 द्रष्टुं कदाचन पदावनि ! नैव जन्तुः
शक्नोति शाश्वतनिधिं निहितं गुहायाम् ।
कृष्णानुरूपहरिनीलविशेषदृश्या
सिद्धाञ्जनं त्वमसि यस्य न देवि दृष्टेः ॥ १४

695 प्रत्येमि रङ्गनृपतेर्मणिपादुके ! त्वां
कृष्णान्तरङ्गरविभिर्हरिनीलरत्नैः ।
विश्वापराधसहनाय पदं तदीयं
विश्वंभरां भगवती समये भजन्तीम् । १५

696 मत्वा मषीं परिमितां भवती तदन्यां
वैकुण्ठपादरसिके मणिपादुके ! स्वान् ।
अङ्के स्वयं किरणलेपिभिरिन्द्रनीलैः
आशातटेषु ललितानपदानवर्णान् ॥ १६

697 वलमथनमणीनां धामभिस्तावकानां
मधुरिपुपदरक्षे ! वासरैरप्यपेता ।
अभिसरणपराणां वल्लवीनां तदासीत्
शमितगुरुभयार्तिश्शर्वरी काचिदन्या ॥ १७

698 शतमखमणिभङ्गैरुन्मयूखैर्दिशन्ती
शरणमुपगतानां रङ्गनाथेन साम्यम् ।
प्रथयसि जगति त्वं पादुके ! हैतुकानां
उपनिषदुपगीतां तत्क्रतुन्यायवार्ताम् ॥ १८

699 परिचरति विधौ त्वां पादुके ! रङ्गभर्तुः
पदसरसिजभृङ्गैर्भासुरैरिन्द्रनीलैः ।
प्रकटितयमुनौघा भक्तिनम्रस्य शंभोः
परिणमयसि चूडा विष्णुपद्याः प्रयागम् ॥ १९

700 पदकिसलयसङ्गात्पादुके! पत्रलश्री-
र्नखमणिभिरुदारैर्नित्यनिष्पन्नपुष्पा ।
शतमखमणिनीला शौरिलावण्यसिन्धो-
र्निबिडतमतमाला कापि वेलावनी त्वम् ॥ २०

701 त्वयिविनिहितमेतत्केऽपि पश्यन्ति मन्दा-
श्शतमखमणिजालं शार्ङ्गिणः पादरक्षे! ।
वयमिदमिह विद्मःप्राणिनां भावुकानां
हृदयगृहगुहाभ्यः पीतमन्धंतमिस्रम् ॥ २१

702 कृतश्यामा मणिभिरसितैः कृष्णपक्षेण जुष्टा
श्रेयः पुंसां जनयसि गतिं दक्षिणामुद्वहन्ती ।
तेनास्माकं प्रथयसि परं पादुके! तत्त्वविद्भिः
मौलौ दृष्टां निगमवचसां मुक्तिकालाव्यवस्थाम् ॥ २२

703 सद्भिर्जुष्टा समुदितविधुर्जैत्रयात्राविनोदे-
ष्वातन्वाना रजनिमनघामिन्द्रनीलांशुजालैः ।
चित्रं ख्याता कुमुदवनतः पादुके! पुष्यसि त्वं
व्याकोचत्वं विबुधवनितावक्त्रपङ्केरुहाणाम् ॥ २३

704 नित्यं लक्ष्मीनयनरुचिरैश्शोभिता शक्रनीलै-
स्सालग्रामक्षितिरिव शुभैश्शार्ङ्गिणो रूपभेदैः ।
साकेतादेस्समधिकगुणां संपदं दर्शयन्ती
मुक्तिक्षेत्रं मुनिभिरखिलैर्गीयसे पादुके! त्वम् ॥ २४

705 पादन्यासप्रियसहचरीं पादुके! वासगेहा-
त्त्वामारुह्य त्रिचतुरपदं निर्गते रङ्गनाथे ।
अन्तस्स्निग्धैरसुरमहिलावेणिविक्षेपमित्रै-
श्श्यामच्छायं भवति भवनं शक्रनीलांशुभिस्ते ॥ २५

706 या ते बाह्याङ्गणमभियतः पादुके! रङ्गभर्तु-
स्सञ्चारेषु स्फुरति विततिश्शक्रनीलप्रभायाः ।
विष्वक्सेनप्रभृतिभिरसौ गृह्यते वेत्रहस्तै-
र्भ्रूविक्षेपस्तव दिविषदां नूनमाह्वानहेतुः ॥ २६

707 अक्ष्णोरञ्जनकल्पना यवनिका लास्यप्रसूतेर्गते-
श्छिद्रङ्गायमुना मुकुन्दजलधेर्वेलातमालाटवी ।
कान्ताकुन्तलसन्ततिः श्रुतिवधूकस्तूरिकालङ्क्रिया
नित्यं रत्नपदावनि! स्फुरति ते नीला मणिश्रेणिका ॥ २७

708 निरन्तरपुरन्दरोपलभुवं द्युतिं तावकी-
मवैमि मणिपादुके! सरणिसङ्गिनीं रङ्गिणः ।
तदीयनवयौवनद्विरदमल्लगण्डस्थली-
गलन्मदझलंझलाबहुलकज्जलश्यामिकाम् ॥ २८

709 प्रतीमस्त्वां पादावनि! भगवतो रङ्गवसते-
र्घनीभूतामित्थं पदकमलमाध्वीपरिणतिम् ।
स्फुरन्तः पर्यन्ते मदगरिमनिस्पन्दमधुप-
प्रसक्तिं यत्रैते विदधति महानीलमणयः ॥ २९

710 नमतां निजेन्द्रनील-
प्रभवेन मुकुन्दपादुके! भवती ।
तमसा निरस्यति तमः
कण्टकमिव कण्टकेनैव ॥ ३०

इति

श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

इन्द्रनीलपद्धतिर्विंशी ।

श्री ॥

# एकविंशी बिम्बप्रतिबिम्बपद्धतिः ।

---

शौरेश्शुद्धान्तनारीणां विहारमणिदर्पणम् ।
प्रसक्तेरिव संस्थान पदत्राणमुपास्महे ॥ १

कमलापतिपादुके ! कदाचित्
विहगेन्द्रस्त्वयि बिम्बितो विभाति ।
सविलासगतेऽपि रङ्गभर्तुः
निजमात्मानमिवोपधातुकामः २

मणिपङ्क्तिषु ते दिशामधीशाः
प्रतिबिम्बानि निजानि वीक्षमाणाः ।
अभियन्ति मुकुन्दपादुके ! त्वा-
मधिकारान्तरसृष्टिशङ्कयेव ॥ ३

मणिमौलिशतेन बिम्बितेन
प्रणतानां परितस्सुरासुराणाम् ।
मुरभिन्मणिपादुके ! महिम्ना
युगपत्तेषु समर्पितेव भासि ॥ ४

715 उपनीतमुपायनं सुरेन्द्रैः
प्रतिबिम्बच्छलतस्त्वयि प्रविष्टम् ।
स्वयमेव किल प्रसादभूम्ना
प्रतिगृह्णासि मुकुन्दपादुके ! त्वम् ॥ ५

716 रङ्गेश्वरस्य नवपल्लवलोभनीयौ
पादौ कथं नु कठिना स्वयमुद्वहेयम् ।
इत्याकलय्य नियतं मणिपादुके ! त्वं
पद्मास्तरं वहसि तत्प्रतिबिम्बलक्षात् ॥ ६

717 पादार्पणात् प्रथमतो हरिदश्मरम्ये
मध्ये तव प्रतिफलन्मणिपादरक्षे ! ।
मन्ये निदर्शयति रङ्गपतिर्युगान्ते
न्यग्रोधपत्रशयितं निजमेव रूपम् ॥ ७

718 यात्रावसानमधिगच्छति रङ्गनाथे
विश्राणयस्यनुपदं मणिपादुके ! त्वम् ।
प्रायः प्रयाणसमये प्रतिबिम्बितानां
तीर्थावगाहमपरं त्रिदशेश्वराणाम् ॥ ८

719 उच्चावचेषु तव रत्नगणेषु मात-
र्वेधाः प्रयाणसमये प्रतिबिम्बिताङ्गः ।
आशङ्कते मधुभिदो मणिपादुके ! त्वा-
मागामिकल्पकमलासनपङ्क्तिगर्भाम् ॥ ९

720 आलोलरश्मिनियतां मणिपादुके ! त्वा-
मारुह्य सञ्चरति रङ्गपतौ सलीलम् ।
अन्तःपुरेषु युगपत्सुदृशो भजन्ते
डोलाधिरोहणरसं त्वयि बिम्बिताङ्ग्यः ॥ १०

721 कालेषु राघवपदावनि ! भक्तिनम्रः
कार्याणि देवि भरतो विनिवेदयंस्ते ।
त्वद्रत्नबिम्बिततयापि मुहुः स्वकीयां
राजासनस्थितिमवेक्ष्य भृशं ललज्जे ॥ ११

722 प्रत्यागते विजयिनि प्रथमे रघूणां
विन्यस्यति त्वयि पदं मणिपादरक्षे ! ।
रत्नौघबिम्बितनिशाचरवानरां त्वां
पूर्वेक्षणस्थमिव पुष्पकमन्वपश्यन् ॥ १२

723 वैयाकुलीं शमयितुं जगतो वहन्त्या
रक्षाधुरां रघुधुरन्धरपादरक्षे ! ।
प्राज्यं यशः प्रचुरचामरबिम्बलक्ष्यात्
प्रायस्त्वया कबलितं प्रतिभूपतीनाम् ॥ १३

724 प्रतिदिशमुपयाते देवि ! यात्रोत्सवार्थं
त्वयि विहरणकाले बिम्बिते जीवलोके ।
वहसि मणिगणैस्त्वं पादुके ! रङ्गभर्तुः
कबलितसकलार्थां काञ्चिदन्यामवस्थाम् ॥ १४

725 भगवति गरुडस्थे वाहनस्थास्सुरेन्द्रा-
स्त्वयि विनिहितपादे भूमिमेवाश्रयन्ति ।
तदपि चरणरक्षे ! रत्नजाले त्वदीये
प्रतिफलितनिजाङ्गास्तुल्यवाहा भवन्ति ॥ १५

726 स्वच्छाकारां सुरयुवतयः स्वप्रतिच्छन्दलक्ष्यात्
गाहन्ते त्वां प्रणतिसमये पादुके ! साभिमानाः ।
स्त्रीरत्नानां परिभवविधौ सृष्टिमात्रेण दक्षां
नीचैःकर्तुं नरसखमुनेरूर्वशीमूरुजाताम् ॥ १६

727 स्वेच्छाकेलिप्रियसहचरीं स्वच्छरत्नाभिरामां
स्थाने स्थाने निहितचरणो निर्विशन् रङ्गनाथः ।
सञ्चारान्ते सह कमलया शेषशय्याधिरूढ-
स्त्यक्त्वापि त्वां त्यजति न पुनः स्वप्रतिच्छन्दलक्ष्यात् ॥१७

728 त्वामेवैकामधिगतवतः केलिसञ्चारकाले
पार्श्वे स्थित्वा विनिहितदृशोः पादुकेऽनन्यलक्ष्यम् ।
त्वद्रत्नेषु प्रतिफलितयोर्नित्यलक्ष्यप्रसादा
पद्माभूम्योर्दिशति भवती पादसेवां मुरारेः ॥ १८

729 एकामेकः किल निरविशत्पादुके ! द्वारकायां
क्रीडायोगी कृतबहुतनुष्षोडशस्त्रीसहस्रे ।
शुद्धे देवि त्वदुपनिहिते बिम्बितो रत्नजाले
भुङ्क्ते नित्यं स खलु भवतीं भूमिकानां सहस्रैः ॥ १९

530 हरिपदनखेषु भवती
प्रतिफलति तवैतदपि रत्नेषु ।
उचिता मिथः पदावनि !
बिम्बप्रतिबिम्बता युवयोः ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**बिम्बप्रतिबिम्बपद्धतिरेकविंशी ।**

श्री. ॥

## द्वाविंशी काञ्चनपद्धतिः ।

731 कल्याणप्रकृतिं वन्दे भजन्तीं काञ्चनश्रियम् ।
पदार्हां पादुकां शौरेः पद एव निवेशिताम् ॥ १

732 मधुजित्तनुकान्तितस्कराणां
जलदानामभयं विधातुकामा ।
चपलेव तदङ्घ्रिमाश्रयन्ती
भवती काञ्चनपादुके! विभाति ॥ २

733 निकषीकृतरम्यकृष्णरत्ना
भवती काञ्चनसम्पदं व्यनक्ति ।
परिपुष्यति पादुके! यदीक्षा
महसा नस्समलोष्टकाञ्चनत्वम् ॥ ३

734 सुरभिर्निगमैस्समग्रकामा
कनकोत्कर्षवती पदावनि! त्वम् ।
दिशसि प्रतिपन्नमाधवश्री-
रनिशोन्निद्रमशोकवैभवं नः ॥ ४

735 सति वर्णगुणे सुवर्णजाते-
र्जगति ख्यातमसौरभादवर्णम् ।
श्रुतिसौरभशालिना स्वहेम्ना
भवती शौरिपदावनि! व्युदस्थात् ॥ ५

736 प्रतिपन्नमयूरकण्ठधाम्ना
परिशुद्धेन पदावनि! स्वकेन ।
कमलास्तनभूषणोचितं तत्
भवती रत्नमलङ्करोति हेम्ना ॥ ६

737 कान्त्या परं पुरुषमाप्रणखात्सुवर्णं
कर्तुं क्षमा त्वमसि काञ्चनपादरक्षे! ।
अन्यादृशां दिशसि या विनतस्य दूरा-
दारग्वधस्तबकसंपदमिन्दुमौलेः ॥ ७

738 चन्द्राकृतिः कथमकल्पयथास्तदानीं
वैमानिकप्रणयिनीवदनाम्बुजानाम् ।
विक्रान्तिकालविततेन निजेन धाम्ना
बालातपं बलिविमर्दनपादुके! त्वम् ॥ ८

739 लेभे तदाप्रभृति नूनमियं भवत्याः
कान्त्या कवेरतनया कनकापगात्वम् ।
यावन्मुकुन्दपदहेमपदावनि! त्वं
पुण्यं विभूषितवती पुलिनं तदीयम् ॥ ९

740 चित्रं सरोजनिलयासहितस्य शौरे-
र्वासोचितानि चरणावनि ! संविधित्सोः ।
सद्यो विकासमुपयान्ति समाधिभाजां
चन्द्रातपेन तव मानसपङ्कजानि ॥ १०

741 त्वय्येव पादमधिरोप्य नवं प्रवाहं
नाथे पदावनि ! निगामयितुं प्रवृत्ते ।
आत्मीयकाञ्चनरुचा भवती विधत्ते
हेमारविन्दभरितामिव हेमसिन्धुम् ॥ ११

742 विहरति पुलिनेषु त्वत्सखे रङ्गनाथे
कनकसरिदियं ते पादुके ! हेमधाम्ना ।
वहति सलिलकेलीस्रस्तचोलावरोध-
स्तनकलशहरिद्रापङ्कपिङ्गामवस्थाम् ॥ १२

743 सुरभिनिगमगन्धा सौम्यपद्माकरस्था
कनककमलिनीव प्रेक्ष्यसे पादुके ! त्वम् ।
भ्रमर इव सदा त्वां प्राप्तनानाविहार-
श्रान्तमखमणिनीलस्सेवते शार्ङ्गधन्वा ॥ १३

744 कनकरुचिरवर्णा पादुके ! सह्यसिन्धुः
श्रियमिव महनीयां सिन्धुराजस्य पत्नी ।
स्वयमिह सविधस्था सौम्यजामातृयुक्ता-
मुपचरति रसेन त्वामपत्याभिमानात् ॥ १४

745 अनुकलमुपजीव्या दृश्यसे निर्जराणां
त्रिपुरमथनमौलौ शेखरत्वं दधाना ।
प्रतिपदमधिगम्य प्रत्यग्रृङ्गासि शौरे-
स्तदपि चरणरक्षे ! पूर्णचन्द्राकृतिस्त्वम् ॥ १५

746 कनकमपि तृणं ये मन्वते वीतरागा-
स्तृणमपि कनकं ते जानते त्वत्प्रकाशैः ।
मधुरिपुपदरक्षे ! त्वत्पदर्थोपनीतान्
परिणमयसि हैमान् देवि दूर्वाङ्कुरादीन् ॥ १६

747 विशुद्धिमधिगच्छति ज्वलनसङ्गमात् काञ्चनं
विदन्ति च जगन्ति तन्न खलु तद्विपर्यस्यति ।
कथं कनकपादुके ! कमललोचने साक्षिणि
त्वयैव परिशुद्धना हुतभुजोऽपि जाघट्यते ॥ १७

748 तारासङ्गप्रथितविभवां चारुजाम्बूनदाभां
त्वामारूढस्त्रिदशमहितां पादुके ! रङ्गनाथः ।
सञ्चारिण्यां सुरशिखरिणस्तस्थुषा मेखलायां
धत्ते मत्तद्विरदपतिना साम्यकक्ष्यां समीक्ष्याम् ॥ १८

749 कनकरुचिरा काव्याख्याता शनैश्चरणोचिता
श्रितगुरुबुधा भास्वद्रूपा द्विजाधिपसेविता ।
विहितविभवा नित्यं विष्णोः पदे मणिपादुके !
त्वमसि महती विश्वेषां नक्षुभा ग्रहमण्डली ॥ १९

750 प्रज्वलितपञ्चहेतिः
हिरण्मयीं त्वां हिरण्यविलयार्हं ।
आवहतु जातवेदाः
श्रियमिव नः पादुके ! नित्यम् ॥ २७

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

काञ्चनपद्धतिर्द्वात्रिंशी ।

श्री· ॥

# त्रयोविंशी शेषपद्धतिः ।

751 स्पृष्टां भूमावनन्तेन नित्यं शेषसमाधिना ।
अहं संभावयामि त्वामात्मानमिव पादुके ! ॥ १

752 पद्माभोगात्पादुके ! रङ्गभर्तुः
पादस्पर्शाद्भोगमन्यं प्रपित्सोः ।
शेषस्यैकां भूमिकामब्रवीत्त्वा-
माचार्याणामग्रणीर्यामुनेयः २

753 शेषत्वमम्ब यदि संश्रयति प्रकामं
त्वद्भूमिकां समधिगम्य भुजङ्गराजः ।
त्वामेव भक्तिविनतैर्वहतां शिरोभिः
काष्ठां गतं तदिह केशवपादरक्षे ! ॥ ३

754 मा भूदियं मयि निषण्णपदस्य नित्यं
विश्वंभरस्य वहनाद्व्यथितेति मत्वा ।
धत्से बलाभ्यधिकया मणिपादुके ! त्वं
शेषात्मना वसुमतीं निजयैव मूर्त्या ॥ ४

755 तत्तादृशा निजबलेन निरूढकीर्ति-
शेषस्तवैव परिणामविशेष एषः ।
रामेण सत्यवचसा यदनन्यवाह्यां
वोढुं पुरा वसुमतीं भवती नियुक्ता ॥ ५

756 शेषत्वसीमनियतां मणिपादरक्षे !
त्वामागमाः कुलवधूमिव बालपुत्राः ।
त्वद्रूपभेदशयितस्य परस्य पुंसः
पादोपधानशयितामुपधानयन्ति ॥ ६

757 भरतशिरसि लग्नां पादुके ! दूरतस्त्वां
स्वतनुमपि ववन्दे लक्ष्मणश्शेषभूतः ।
किमिदमिह विचित्रं नित्ययुक्तस्सिषेवे
दशरथतनयस्सन्रङ्गनाथः स्वमेव ॥ ७

758 भूयो भूयः स्तिमितचलिते यस्य सङ्कल्पसिन्धौ
ब्रह्मेशानप्रभृतय इमे बुद्बुदत्वं भजन्ति ।
तस्यानादेर्युगपरिणतौ योगनिद्रानुरूपं
क्रीडातल्पं किमपि तनुते पादुके ! भूमिकान्या ॥ ८

759 अहीनात्मा रङ्गक्षितिरमणपादावनि ! सदा
सतामित्थं त्राणात् प्रथितनिजसत्त्वविभवा ।
अविद्यायामिन्याः स्पृशसि पुनरेकाहपदवीं
क्रतूनामाराध्या क्रतुरपि च सर्वेस्त्वमसिनः ॥ ९

१००० बहुमुखभोगसमेतैः
निर्मुक्ततया विशुद्धिमापन्नैः ।
शेषात्मिका पदावनि
निषेव्यसे शेषभूतैस्त्वम् ॥ १०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

शेषपद्धतिः त्रयोविंशी ।

श्री ॥

# चतुर्विंशी द्वन्द्वपद्धतिः ।

---

761 प्रपद्ये पादुकारूपं प्रणवस्य कलाद्वयम् ।
ओतं मितमिदं यस्मिन्ननन्तस्यापि तत्पदम् ॥ १

762 मणिपादुकयोर्युगं मुरारे-
र्मम नित्यं विदधातु मङ्गलानि ।
अधिकृत्य चराचरस्य रक्षा-
मनुकम्पाक्षमयोरिवावतारः ॥ २

763 चरणौ मणिपादुके ! मुरारेः
प्रणतान् पालयितुं प्रपद्यमानम् ।
विपदामिह दैवमानुषीणां
प्रतिकारं युवयोर्द्वयं प्रतीम. ॥ ३

764 मुरभिन्मणिपादुके ! भवत्यो-
र्विहितो नूनमसौ मिथो विभागः ।
भजतामपरस्परप्रियाणां
अविरोधाय सुरासुरेश्वराणाम् ॥ ४

765 अहितोन्मथनाय संश्रितानां-
मलमालोकवशेन शब्दतो वा ।
करयोश्च रथाङ्गपाञ्चजन्यौ
मधुहन्तुः पदयोश्च पादुके ये ॥ ५

766 अवधीरितसाधुपद्धतीना-
मलसानां मधुवैरिपादुके द्वे ।
इतरेतरसाहचर्यमित्थं
प्रतिपन्ने इव दैवपौरुषे नः ॥ ६

767 पार्श्वयोस्सरसिजावसुन्धरे
पादयोश्च मणिपादुके! युवाम् ।
सन्निकर्षथ न चेन्मधुद्विषः
किं करिष्यति कृतागसां गणः ॥ ७

768 पादुके! भवभयप्रतीपयो-
र्भावयामि युवयोस्समागमम् ।
सक्तयोर्दनुजवैरिणः पदे
विद्ययोरिव परावरात्मनोः ॥ ८

769 रङ्गसीमनि रथाङ्गलक्ष्मण-
श्चिन्तयामि तपनीयपादुके! ।
शापदोषशमनाय तत्पदे
चक्रवाकमिथुनं कृतास्पदम् ॥ ९

770 मानयामि जगतस्तमोपहे
माधवस्य मणिपादुके! युवाम् ।
दक्षिणोत्तरगतिक्रमोचिते
पद्धती इव मयूखमालिनः ॥ १०

771 रङ्गनाथपदयोरलङ्क्रिया
राजते कनकपादुकाद्वयी ।
तद्विभूतियुगलीव तादृशी
छन्दतस्समविभागमाश्रिता ॥ ११

772 साक्षात्पदं मधुभिदः प्रतिपादयन्त्यौ
मानोपपत्तिनियते मणिपादुके द्वे ।
अन्योन्यसङ्गतिवशादुपपन्नचर्या-
माज्ञां श्रुतिस्मृतिमयीमवधारयामि ॥ १२

773 विश्वोपकारमधिकृत्य विहारकाले-
ष्वन्योन्यतः प्रथममेव परिस्फुरन्त्योः ।
दृष्टान्तयन्ति युवयोर्मणिपादरक्षे!
दिव्यं तदेव मिथुनं दिविषन्निषेव्यम् ॥ १३

774 द्वावेव यत्र चरणौ परमस्य पुंस-
स्तत्र द्विधास्थितवती मणिपादुके! त्वम् ।
यत्रैव दर्शयति देवि सहस्रपात्त्वं
तत्रापि नूनमसि दर्शिततावदात्मा ॥ १४

775 पर्यायतो गतिवशान्मणिपादरक्षे !
पूर्वापरत्वनियमं व्यतिवर्तयन्त्यौ ।
मन्ये युवां महति विष्णुपदे स्फुरन्त्यौ
सन्ध्ये समस्तजगतामभिवन्दनीये ॥ १५

776 अश्रान्तसञ्चरणयोर्निजसंप्रयोगा-
दम्लानतां चरणपङ्कजयोर्दिशन्त्यौ ।
मान्ये युवां रघुपतेर्मणिपादरक्षे !
विद्ये बलामतिबलां च विचिन्तयामि ॥ १६

777 अन्तर्मोहादविदितवतामात्मतत्त्वं यथावत्
पद्यामित्थं परिचितवतां पादुके ! पापलोक्याम् ।
नित्यं भक्तेरनुगुणतया नाथपादं भजन्त्यौ
निष्ठे साक्षात् स्वयमिह युवां ज्ञानकर्मात्मिके नः ॥ १७

778 न्यस्तं विष्णोः पदमिह महत्त्वेन भूम्ना वहन्त्यो-
राम्नायाख्यामविहतगतिं वर्तयन्त्योर्निजाज्ञाम् ।
आसन्नानां प्रणयपदवीमात्मना पूरयन्त्यो-
र्द्वैराज्यश्रीर्भवति जगतामैकराज्ये भवत्योः ॥ १८

779 अप्राप्तानामुपजनयथस्संपदां प्राप्तिमेवं
संप्राप्तानां स्वयमिह पुनः पालनार्थं यतेथे ।
साक्षाद्रङ्गक्षितिपतिपदं पादुके ! साधयन्त्यौ
योगक्षेमौ सुचरितवशान्मूर्तिमन्तौ युवां नः ॥ १९

780 बद्धहरिपादयुगलं
युगलं तपनीयपादुके! युवयोः ।
मोचयति संश्रितानां
पुण्यापुण्यमयश्रृङ्खलायुगलम् ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

द्वन्द्वपद्धतिश्चतुर्विंशी ।

श्री ॥

# पञ्चविंशी सन्निवेशपद्धतिः ।

---

781 अणोरणीयसीं विष्णोर्महतोऽपि महीयसीम् ।
प्रपद्ये पादुकां नित्यं तत्पदेनैव संमिताम् ॥ १

782 प्रतितिष्ठति पादसंमितायां
त्वयि नित्यं मणिपादुके! मुकुन्दः ।
इतरे तु परिच्छदास्त एते
विभवव्यञ्जनहेतवो भवन्ति ॥ २

783 तव रङ्गनरेन्द्रपादरक्षे!
प्रकृतिस्सन्नपि भक्तिपारतन्त्र्यात् ।
भवतीं वहतीव पन्नगेन्द्रः
प्रथितस्वस्तिकलक्षणैश्शिरोभिः ॥ ३

784 परस्य पुंसः पदसन्निवेशान्
प्रयुञ्जते भावितपञ्चरात्राः ।
अघप्रतीपानपदिश्य पुण्ड्रा-
नङ्गेषु रङ्गेशयपादुके! त्वाम् ॥ ४

785 विमृश्य रङ्गेन्द्रपतिंवरायाः
श्रुतेः स्थितां मूर्धनि पादुके ! त्वाम् ।
बध्नन्ति वृद्धास्समये वधूनां
त्वन्मुद्रितान्याभरणानि मौलौ ॥ ५

786 वहन्ति रङ्गेश्वरपादरक्षे !
दीर्घायुषां दर्शितभक्तिबन्धाः ।
आशाधिपानामवरोधनार्य-
स्त्वन्मुद्रिकां मङ्गलहेमसूत्रैः ॥ ६

787 व्यूहक्रमेण प्रथितारमग्रे
सन्दर्शयन्तीं मणिपादुके ! त्वाम् ।
पातुं त्रिलोकीं पदपद्मभाजं
सौदर्शिनीं शक्तिमवैमि शौरेः ॥ ७

788 बद्धासिका कनकपङ्कजकर्णिकायां
मध्ये कृशा मुररिपोर्मणिपादुके ! त्वम् ।
संदृश्यसे सरसिजासनया गृहीतं
रूपान्तरं किमपि रङ्गविहारयोग्यम् ॥ ८

789 मानोचितस्य मदधीनजनस्य नित्यं
मा भूदतः कृपणतेति विचिन्तयन्त्या ।
बन्दीकृतं ध्रुवमवैमि वलग्नदेशे
कार्श्यं त्वया कमललोचनपादरक्षे ! ॥ ९

790 मध्ये कृशामुभयतः प्रतिपन्नवृद्धिं
मन्ये समीक्ष्य भवतीं मणिपादरक्षे ! ।
नित्यं मुकुन्दपदसङ्गमविप्रयोगौ
निश्चिन्वते कृतधियस्सुखदुःखकाष्ठाम् ॥ १०

791 रङ्गेशितुश्चरणपङ्कजयोर्भजन्ती
रक्षाप्रसाधनविकल्पसहामवस्थाम् ।
मान्याकृतिर्निविशसे मणिपादरक्षे !
मध्ये परिच्छदविभूषणवर्गयोस्त्वम् ॥ ११

792 अङ्गान्तरेषु निहितान्यखिलानि कामं
पर्यायकल्पनसहानि विभूषणानि ।
नित्यं मुकुन्दपदपद्मतलानुरूपं
नैपथ्यमम्ब भवती ! नयनाभिरामम् ॥ १२

793 ये नाम भक्तिनियतैस्तव सन्निवेशं
निर्विश्य नेत्रयुगलैर्न भजन्ति तृप्तिम् ।
कालक्रमेण कमलेक्षणपादरक्षे !
प्रायेण ते परिणमन्ति सहस्रनेत्राः ॥ ३

794 पदमप्रमाणमिति वादिनां मतं
मधुजित्पदे महति मा स्म भूदिति ।
व्युदपादि तस्य चरणावनि ! त्वया
निगमात्मनस्तव समप्रमाणता ॥ १४

795 अप्रभूतमभवज्जगत्त्रयं
यस्य मातुमुदितस्य पादुके! ।
अप्रमेयममितस्य तत्पदं
नित्यमेव ननु संमितं त्वया ॥

796 आलवालमिव भाति पादुके!
पादपस्य भवती मधुद्विषः ।
यत्समीपविनतस्य शूलिनः
सारिणी भवति मौलिनिम्नगा ॥

797 मोदमानमुनिबृन्दषट्पदा
भाति मुक्तिमकरन्दवर्षिणी ।
कापि रङ्गनृपतेः पदाम्बुजे
कर्णिका कनकपादुकामयी ॥

798 युगपदनुविधास्यन् यौवतं तुल्यरागं
यदुपतिरधिचक्रे यावतो रूपभेदान् ।
तदिदमतिविकल्पं बिभ्रती सन्निवेशं
तव खलु पदरक्षे! तावती मूर्तिरासीत् ॥

799 तत्तद्वृत्तेरनुगुणतया वामनीं व्यापिनीं वा
प्राप्ते रङ्गप्रथितविभवे भूमिकां सूत्रधारे ।
मन्ये विश्वस्थितिमयमहानाटिकां नेतुकामा
नानासंस्था भवति भवती पादुके! नर्तकीव ॥

800 माने परं समाने
प्रत्यक्षेणागमेनापि ।
हरिचरणस्य तवापि तु
वैषम्यं रक्ष्यरक्षकत्वाभ्याम् ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**पञ्चविंशी सन्निवेशपद्धतिः ।**

श्रीः ॥

## षड्विंशी यन्त्रिकापद्धतिः ।

---

801 उदग्रयन्त्रिकां वन्दे पादुकां यन्निवेशनात् ।
उपर्यपि पदं विष्णोः प्रत्यादिष्टप्रसाधनम् ॥ १

802 प्रसभं प्रतिरुध्य कण्टकादीन्
भवती शौरिपदाम्बुजादधस्तात् ।
चरणावनि! धारयत्यमुष्मिन्
उचितच्छायमुपर्यपि प्रतीकम् ॥ २

803 मुरभिन्मणिपादुके! त्वदीया-
मनघामङ्गुलियन्त्रिकामवैमि ।
स्वयमुन्नमितां प्रदेशिनीं ते
परमं दैवतमेकमित्युदन्तीम् ॥ ३

804 स्वदते मणिपादुके! त्वदीया
पदशाखायुगयन्त्रिका विचित्रा ।
परमं पुरुषं प्रकाशयन्ती
प्रणवस्येव परेयमर्धमात्रा ॥ ४

805 अनुयातमनोरथा मुरारे-
भवती केलिरथश्रियं दधाति।
चरणावनि! यन्त्रिका तवैषा
तनुते कूबरसंपदं पुरस्तात्॥ ५

806 शङ्के भवत्यास्सुभग प्रतीकं
रङ्गेशपादाङ्गुलिसङ्ग्रहार्थम्।
त्राणाय पादावनि! विष्टपाना-
माज्ञाकरीमङ्गुलिमुद्रिकां ते॥ ६

807 अलङ्कृतं कर्णिकयोपरिष्टा-
दुदग्रनालं तव यन्त्रिकांशम्।
पद्मापतेः पादसरोजलक्ष्म्याः
प्रत्येमि पादावनि! केलिपद्मम्॥ ७

808 उपरि विनिहितस्य केशवाङ्घ्रे-
रुपरि पदावनि! यन्त्रिकात्मिका त्वम्।
इति तव महिमा लघूकरोति
प्रणतसुरेश्वरशेखराधिरोहम्। ८

809 नित्यं पदावनि! निबद्धकिरीटशोभं
पद्मालयापरिचितं पदमुद्वहन्त्याः।
अङ्गीकरोति रुचिमङ्गुलियन्त्रिका ते
साम्राज्यसंपदनुरूपमिवातपत्रम्॥ ९

810 प्रथमा कलेव भवती
चरणावनि ! भाति रङ्गचन्द्रमसः ।
शृङ्गोन्नतिरिव यत्र
श्रियं विभावयति यन्त्रिकायोगः ॥ १०

इति

श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

यन्त्रिकापद्धतिष्षड्विंशी ।

श्री ॥

## सप्तविंशी रेखापद्धतिः ।

---

सूचयन्तीं स्वरेखाभिरनालेख्यसरस्वतीम् ।
अलेखनीयसौन्दर्यामाश्रये शौरिपादुकाम् ॥ १

मणिमौलिनिघर्षणात्सुराणां
　वहसे काञ्चनपादुके! विचित्रम् ।
कमलापतिपादपद्मयोगा-
　दपरं लक्षणमाधिराज्यसारम् ॥ २

अभितो मणिपादुके! स्फुरन्त्या-
　स्तव रेखाविततेस्तथाविधायाः ।
मुरवैरिपदारविन्दरूढै-
　रनुकल्पायितमाधिराज्यचिह्नैः ॥ ३

रेखया विनमतां दिवौकसां
　मौलिरत्नमकरीमुखोत्थया ।
पादुके! वहसि नूनमद्भुत
　शौरिपादपरिभोगलक्षणम् ॥ ४

815 त्रिदशमकुटरत्नोल्लेखरेखापदेशात्
परिणमयसि पुंसां पादुके! मूर्ध्नि लग्ना ।
नरकमथनसेवासंपदं साधयित्री
नियतिविलिखितानां निष्कृतिं दुर्लिपीनाम् ।

816 पदकमलतलान्तस्संश्रितान्यातपत्र-
ध्वजसरसिजमुख्यान्यैश्वरीलक्षणानि ।
अवगमयसि शौरेः पादुके! मादृशाना-
मुपरिपरिणतैः स्वैर्देवि रेखाविशेषैः ॥

817 स्नाता पदावनि! चिरं परिभुज्य मुक्ता
पादेन रङ्गनृपतेश्शुभलक्षणेन ।
रेखान्तरैर्नवनवैरुपशोभसे त्वं
संस्कारचन्दनविलेपनपङ्कलग्नैः ॥

818 भक्त्या मुहुः प्रणमतां त्रिदशेश्वराणां
कोटीरकोटिकषणादुपजायमानैः ।
आभाति शौरिचरणादधिकानुभावा
रेखाशतैस्तव पदावनि! कापि रेखा ॥

819 पादावनि! प्रतिपदं परमस्य पुंसः
पादारविन्दपरिभोगविशेषयोग्या ।
स्वाभाविकान्सुभगभक्तिविशेषदृश्यान्
रेखात्मकान्वहसि पत्रलताविशेषान् ॥

820 रेखापदेशतस्त्वं
प्रशमयितुं प्रलयविप्लवाशङ्काम् ।
वहसि मधुजित्पदावनि !
मन्ये निगमस्य मातृकालेख्यम् ॥ २०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

रेखापद्धतिस्सप्तविंशी ।

श्री ॥

## अष्टाविंशी सुभाषितपद्धतिः ।

---

821 कलासु काष्ठामातिष्ठन् भुङ्क्ते संबन्धिनामपि ।
पादुका रङ्गधुर्यस्य भरताराध्यतां गता ॥ १

822 सन्तस्स्वदेशपरदेशविभागशून्यं
हन्त स्ववृत्तिमनघां न परित्यजन्ति ।
राज्ये वने च रघुपुङ्गवपादरक्षा
नैजं जहौ न खलु कण्टकशोधनं तत् ॥ २

823 ब्रह्मास्त्रतामधिजगाम तृणं प्रयुक्तं
पुण्यं शरव्यमभवत् पयसां निधिर्वा ।
पृथ्वीं शशास परिमुक्तपदं पदत्रं
किं वा न किं भवति केलिविधौ विभूनाम् ॥ ३

824 अन्येषु सत्स्वपि नरेन्द्रसुतेषु दैवात्
भ्रष्टः पदादधिकरोति पदं पदार्हः ।
प्रायो निदर्शयति तत्प्रथमो रघूणां
तत्पादयोः प्रतिनिधी मणिपादुके वा ॥ ४

825 चरणमनघवृत्तेः कस्यचित् प्राप्य नित्यं
सकलभुवनगुप्त्यै सत्पथे वर्तते यः।
नरपतिवहुमान पादुके! वाधिगच्छन्
स भवति समयेषु प्रेक्षितज्ञैरुपास्यः॥ ५

826 रामे राज्यं पितुरभिमतं संमतञ्च प्रजानां
माता वव्रे तदिह भरते सत्यवादी ददौ च।
चिन्तातीतस्समजनि तदा पादुकाग्र्याभिषेकः
दुर्विज्ञानस्वहृदयमहो दैवमत्र प्रमाणम्॥ ६

827 नातिक्रामेच्चरणवहनात् पादुका पादपीठं
यद्वासन्नं परमिह सदा भाति राजासनस्य।
पूर्वत्रैव प्रणिहितमभूद्धन्त रामेण राज्यं
शङ्के भर्तुर्वहुमतिपदं विक्रमे साहचर्यम्॥ ७

828 प्रतिपदचपलापि पादुका
रघुपतिना स्वपदे निवेशिता।
समजनि निभृतस्थितिस्तदा
भवति गुणश्श्रियमभ्युपेयुषाम्॥ ८

829 गतिहेतुरभूत् क्वचित्पदे
स्थितिहेतुर्मणिपादुका क्वचित्।
न हि वस्तुषु शक्तिनिश्चयो
नियतिः केवलमीश्वरेच्छया॥ ९

830 अधरीकृतोऽपि महता
तमेव सेवेत सादरं भूष्णुः ।
अलभत समये रामात्
पादाक्रान्तापि पादुका राज्यम् ॥ १०

इति

श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

सुभाषितपद्धतिः अष्टाविंशी ।

श्री. ॥

# एकोनत्रिंशी प्रकीर्णपद्धतिः ।

---

विधौ प्रवृत्ते यद्द्रव्यं गुणसंस्कारनामभिः ।
श्रेयस्साधनमाम्नातं तत्पदत्रं तथास्तु मे ॥ १

मधुरस्मितरम्यमौक्तिकश्री-
र्विशसि व्यञ्जितमञ्जुलप्रणादा ।
सह रङ्गनृपेण वासगेहं
तनुमध्या मणिपादुके! त्वमेका ॥ २

शुभशब्दविशेषसंश्रिताभि-
र्भवती शौरिपदावनि! क्रियाभिः ।
अनुतिष्ठति नूनमाश्रिताना-
मखिलोपद्रवशान्तिकं नवीनम् ॥ ३

मणिभिर्मधुवैरिपादरक्षे!
भवती विक्रमणे प्रवर्धमाना ।
युगपद्भवतां युगान्तकाले
दिवि लक्ष्मीं विदधे दिवाकराणाम् ॥ ४

845

त्वनां मणिमयूखकलापिनीं त्वां
ष्ट्वा कपर्दसविधे विनिवेश्यमानाम् ।
भवन्ति गरुडध्वजपादरक्षे !
फूत्कारवन्ति पुरवैरिविभूषणानि ॥ ५

846

ये परिस्फुरितनिर्मलचन्द्रतारा
प्रान्तेषु रत्ननिकरेण विचित्रवर्णा ।
गासि रङ्गनृपतेर्मणिपादुके ! त्वं
चक्षुर्वशीकरणयन्त्रविशेषशङ्काम् ॥ ६

847

दिन रङ्गनृपतेः परिभुज्यमाना
मुक्ताफलप्रकटितश्रमवारिबिन्दुः ।
त्कण्टका मणिमयूखशतैरदभ्रै-
स्सीत्कारिणीव चरणावनि ! शिञ्जितैस्त्वम् ॥ ७

84

दूरप्रसारितकरा निनदैर्मणीना-
मायाति दैत्यरिपुरित्यसकृद्ब्रुवाणा ।
दैत्येश्वरानभिमुखान् जनितानुकम्पा
मन्ये निवारयसि माधवपादुके ! त्वम् ॥ ८

849

अच्छेद्यरश्मिनियतक्रमरत्नधुर्या
निष्कम्पकूबरनिभं दधती प्रतीकम् ।
क्रीडागतेषु मधुजित्पदपद्मलक्ष्म्याः
कर्णीरथस्त्वमसि काञ्चनपादरक्षे ! ॥ ९

840 मञ्जुस्वना मरतकोपलमेचकाङ्गी
शोणाश्मतुण्डरुचिरा मणिपादुके ! त्वम् ।
पद्माविहाररसिकस्य परस्य यूनः
पर्यायतां भजसि पञ्जरशारिकाणाम् ॥ १०

841 शोणोपलैश्चरणरक्षिणि ! संश्रितेषु
छायात्मना मरतकेषु तवावगाढः ।
अन्वेति शौरिरभितःफलपङ्क्तिशोभि-
न्यात्मानमेव शयितं वटपत्रमध्ये ॥ ११

842 स्फीतं पदावनि ! तव स्नपनार्द्रमूर्ते-
रासागरं ततमभून्मणिरश्मिजालम् ।
लीलोचित रघुसुतस्य शरव्यमासन्
यातूनि यस्य वलयेन विवेष्टितानि ॥ १२

843 रत्नांशुभिस्तव तदा मणिपादरक्षे !
संरज्यमानवपुषां रजनीमुखेषु ।
आकस्मिकागतमदर्शि महौषधित्वं
साकेतपत्तनसमीपरुहां द्रुमाणाम् ॥ १३

844 रामे वनं दशरथे च दिवं प्रयाते
निर्धूतविश्वतिमिरा सहसा बभूव ।
भूयिष्ठरत्नकिरणा भवती रघूणां
भूयः प्रतापतपनोदयपूर्वसन्ध्या ॥ १४

845 प्रीतेन देवि विभुना प्रतिपादनीयां
पादावनि ! प्रतिपदोदितमञ्जुनादाम् ।
विद्यां विदुर्भगवतः प्रतिपादनार्हां
पारायणागमपयोनिधिपारगास्त्वाम् ॥ १५

846 मुक्तांशुकेसरवती स्थिरवज्रदंष्ट्रा
प्रह्लादसंपदनुरूपहिरण्यभेदा ।
मूर्तिश्श्रियो भवसि माधवपादरक्षे !
नाथस्य नूनमुचिता नरसिंहमूर्तेः ॥ १६

847 संभावयन्ति कवयश्चतुरप्रचारां
मञ्जुस्वनां महितमौक्तिकपत्रलाङ्गीम् ।
स्वाधीनसर्वभुवनां मणिपादुके ! त्वां
रङ्गाधिराजपदपङ्कजराजहंसीम् ॥ १७

848 मुक्तामयूखरुचिरां मणिपादरक्षे !
मञ्जुस्वनां मणिभिराहितवर्णवर्गाम् ।
मन्ये मुकुन्दपदपद्ममधुव्रतीना-
मन्यामकृत्रिमगिरामधिदेवतां त्वाम् ॥ १८

849 आसाद्य केकयसुतावरदानमूलं
कालं प्रदोषमनिरीक्ष्यरमासहायम् ।
मञ्जुप्रणादरहिता मणिपादरक्षे !
मौनव्रतं किमपि नूनमवर्तयस्त्वम् ॥ १९

850 वैडूर्यरम्यसलिला महिता मरुद्भिः
छायावती मरतकपोलरश्मिजालैः ।
अश्रान्तमोहपदवीपथिकस्य जन्तो-
र्विश्रान्तिभूमिरिव शौरिपदावनि ! त्वम् ॥ २०

851 आद्यो रघुक्षितिभुजामभिषेकदीप्तै-
राप्यायितस्तव पदावनि ! रश्मिजालैः ।
मन्दीचकार तपनो व्यपनीतभीति-
र्मन्दोदरीवदनचन्द्रमसो मयूखान् ॥ २१

852 माया समस्तजगतां मणिभङ्गनीला
पादे निसर्गघटिता मणिपादुके ! त्वम् ।
अन्तःपुरेषु ललितानि गतागतानि
छायेव रङ्गनृपतेरनुवर्तसे त्वम् ॥ २२

853 रङ्गाधिराजपदपङ्कजमाश्रयन्ती
हैमी स्वयं परिगता हरिनीलरत्नैः ।
संभाव्यसे सुकृतिभिर्मणिपादुके ! त्वं
सामान्यमूर्तिरिव सिन्धुसुताधरण्योः ॥ २३

854 अभ्यर्चिता सुमनसां निवहैरजस्रं
मुक्तारुणोपलनखाङ्गुलिपल्लवश्रीः ।
श्रेयस्करीं मुरभिदश्चरणद्वयीव
कान्तिं समाश्रयसि काञ्चनपादुके ! त्वम् ॥ २४

855 निर्मृष्टगात्ररुचिरा मणिपादुके ! त्वं
स्नातानुलेपसुरभिर्नवमाल्यचित्रा ।
प्राप्ते विहारसमये भजसे मुरारेः
पादारविन्दपरिभोगमनन्यलभ्यम् ॥ २५

856 नादे पदावनि ! तथा तव सन्निवेश-
निर्वेशनक्रममसह्यमपाचिकीर्षुः ।
यैरेव लोचनशतैरभिवीक्षते त्वां
तैरेव पन्नगपतिश्श्रुतिमान् बभूव ॥ २६

857 पादावनि ! स्फुटमयूखसहस्रदृश्या
विष्णोः पदेन भवती विहितप्रचारा ।
त्वद्भक्तियन्त्रिनजनप्रथमस्य शंभो-
र्वैकर्तनीमनुकरोति विहारमूर्तिम् ॥ २७

858 राज्ये वनेऽपि रघुवीरपदोचिताया-
स्संस्मृत्य गौतमवधूपरिरक्षणं ते ।
मन्ये समाहितधियो मणिपादुके ! त्वां
मूर्ध्ना भजन्त्यनुदिनं मुनिधर्मदाराः ॥ २८

859 त्वामाश्रितो मणिमयूखसहस्रदृश्यां
त्वच्छिञ्जितेन सह रङ्गपतिस्समुद्यन् ।
आशङ्क्यते सुमतिभिर्मणिपादरक्षे !
विद्यासखस्सवितृमण्डलमध्यवर्ती ॥ २९

860 रत्नाश्रितैर्हरिपदं मणिपादुके ! त्वं
स्पृष्ट्वा करैश्श्रुतिरसायनमञ्जुनादा ।
तत्त्वं तदेतदिति बोधयसीव सम्यक्
वेदान् प्रतारितवतो विविधान्कुदृष्टीन् ॥ ३०

861 आनन्दसूः प्रणयिनामनघप्रसादा
रङ्गाधिराजपदरक्षिणि ! रत्नभासा ।
न्यस्ते मुहुर्निजभरे स्थिरतां भजन्त्या
वर्णांशुकं वितरसीव वसुन्धरायाः ॥ ३१

862 त्वं चित्रभानुरसि रत्नविशेषयोगात्
भूम्ना निजेन परिपुष्यसि पावकत्वम् ।
स्वेनैव शौरिचरणावनि ! चन्द्ररूपा
तेजस्त्रयीव मिलितासि तमोपहा नः ॥ ३२

863 प्रौढप्रवालरुचिरा भुवनैकवन्द्या
रङ्गाधिराजचरणावनि ! रम्यचन्द्रा ।
संभिन्नमौक्तिकरुचिस्सततं प्रजानां
तापात्ययं दिशसि तारकितेव सन्ध्या ॥ ३३

864 रङ्गेश्वरस्य पुरतो मणिपादुके ! त्वं
रत्नांशुभिर्विकिरसि स्फुटभक्तिवन्द्या ।
पादौ विहारयितुमद्भुतसौकुमार्यौ
प्रायस्सरोजकुमुदोत्पलपत्रपङ्क्तिम् ॥ ३४

865 आसन्नवृत्तिरवरोधगृहेषु शौरे-
रापादयस्यनुपदं वरवर्णिनीनाम् ।
आलम्बरत्नकिरणा मणिपादुके! त्वं
मञ्जुस्वना मदनबाणनिघर्षशङ्काम् ॥ ३५

866 पर्याप्तमौक्तिकनखा स्फुटपद्मरागा
रेखाविशेषरुचिरा ललितप्रचारा ।
रङ्गाधिराजपदयोर्मणिपादुके! त्वं
सायुज्यम श्रितवतीव समस्तवन्द्या ॥ ३६

867 प्राप्ताभिषेका मणिपादुके! त्वं
प्रदीप्तरत्ना रघुराजधन्याः ।
प्रदक्षिणप्रक्रमणादकार्षीः
प्राकारमाग्नेयमिव प्रभाभिः ॥ ३७

868 रत्नासने राघवपादरक्षे!
प्रदीप्यमानास्तव पद्मरागाः ।
प्रायो नरेन्द्रान् भरतस्य जेतुः
प्रतापवह्नेरभवन् प्ररोहाः ॥ ३८

869 शुभप्रणादा भवती श्रुतीनां
कण्ठेषु वैकुण्ठपतिंवराणाम् ।
बध्नासि नूनं मणिपादरक्षे!
मङ्गल्यसूत्रं मणिरश्मिजालैः ॥ ३९

870 विचित्रवर्णा श्रुतिरम्यशब्दा
निषेव्यसे नाकसदां शिरोभिः ।
मधुद्विषस्त्वं मणिपादरक्षे!
श्रेयस्करी शासनपत्रिकेव ॥ ४०

871 स्थिरा स्वभावान्मणिपादुके! त्वं
सर्वंसहा स्वादुफलप्रसूतिः ।
पृथ्वीव पद्भ्यां परमस्य पुंस-
स्संसृज्यसे देवि विभज्यसे च ॥ ४१

872 पश्यन्ति रङ्गेश्वरपादरक्षे!
पूजासु ते संहितपुष्पजालाम् ।
मृगीदृशो वासवरत्नरेखां
सचित्रपुङ्खामिव मन्मथज्याम् ॥ ४२

873 करैरुदग्रैस्स्फुरतां मणीनां
मञ्जुस्वना माधवपादुके! त्वम् ।
अनूपदेशे कनकापगायाः
कलेः प्रवेशं प्रतिषेधसीव ॥ ४३

874 आक्रान्तवेदिर्भवती तदानी-
मदर्शि मुक्तान्वितशोणरत्ना ।
करग्रहार्थं भरतेन भूम्याः
लाजोत्करैर्वह्निशिखेव कीर्णा ॥ ४४

875 पत्त्रला मणिगणैर्हिरण्मयी
भासि रङ्गपतिरत्नपादुके ! ।
केलिमण्टपगतागतोचिता
भूमिकेव गरुडेन कल्पिता ॥ ४५

876 उन्नतं बलिविरोधिनस्तदा
पादुके ! पदसरोजमाश्रिता ।
मौक्तिकस्तबकमध्यसाश्रितं
व्योम षट्पदतुलामलम्भयः ॥ ४६

877 कोमलाङ्गुलिनिवेशयन्त्रिका-
न्यस्तमौक्तिकमयूखदन्तुरा ।
मङ्गलानि वमसीव देहिनां
रङ्गराजमणिपादुके ! स्वयम् ॥ ४७

878 पङ्कजासहचरस्य रङ्गिणः
पादुके ! निजपदादनन्तरम् ।
न्यस्यतस्त्वयि जगन्ति जायते
नागभोगशयनं निरङ्कुशम् ॥ ४८

879 साधयन्ति मधुवैरिपादुके !
साधवः स्थिरमुपायमन्तिमम् ।
त्वत्प्रवृत्तिविनिवर्तनोचित-
स्वप्रवृत्तिविनिवर्तनान्वितम् ॥ ४९

880 नन्दसूनुपदपद्ममिन्दिरा-
पाणिपल्लवनिपीडनासहम् ।
पादुके ! तव बलेन पर्यभू-
द्रूष्मलामुरगमौलिशर्कराम् ॥ ५०

881 मणिनिकरसमुत्थैस्तवैवर्णा मयूखैः
प्रकटितशुभनादा पादुके ! रङ्गभर्तुः ।
निखिलनिगमसूतेर्ब्रह्मणस्तत्सनाथा-
मवगमयसि हृद्यामर्धमात्रां चतुर्थीम् ॥ ५१

882 श्रुतिविषयगुणा त्वं पादुके ! दैत्यहन्तु-
स्सततगतिमनोज्ञा स्वेन धाम्ना ज्वलन्ती ।
जनितभुवनवृद्धिर्दृश्यसे स्थैर्ययुक्ता
विधृतनिखिलभूता वैजयन्तीव माला ॥ ५२

883 रघुपतिपदसङ्गाद्राज्यखेदं त्यजन्ती
पुनरपि भवती स्वान् दर्शयन्ती विहारान् ।
अभिसमधित वृद्धिं हर्षकोलाहलानां
जनपदजनितानां ज्यायसा शिञ्जितेन ॥ ५३

884 हरिचरणमुपघ्नं पादुके ! संश्रितायां-
मधिगतबहुशाखावैभवं दर्शयन्त्याम् ।
अभजत विधिहस्तन्यस्तधर्मद्रवायां
त्वयि मुकुलसमृद्धिं मौक्तिकश्रीस्तदानीम् ॥ ५४

885 कनकरुचिरकान्तिः कल्पिताशोकभारा
कृतपदकमलश्रीः क्रीडता माधवेन ।
दिशि दिशि सुमनोभिर्दर्शनीयानुभावा
सुरभिसमयलक्ष्मीं पादुके ! पुष्यसि त्वम् ॥ ५५

886 प्रणिहितपदपद्मा पादुके ! रङ्गभर्तु-
श्शुभतरगतिहेतुश्चारुमुक्ताप्रवाला ।
स्थिरपरिणतरागां शुद्धबोधानुबद्धां
स्वजनयसि मुनीनां त्वन्मयीं चित्तवृत्तिम् ॥ ५६

887 विरचितनवभागा रत्नभेदैर्विचित्रै-
र्विविधविततरेखा व्यक्तसीमाविभागा ।
हरिचरणसरोजं प्रेप्सतामर्चनीयं
प्रथयसि नवनाभं मण्डलं पादुके ! त्वम् ॥ ५७

888 परिणतगुणजाला पङ्क्तिभिर्मौक्तिकानां
बहुविधमणिरश्मिग्रन्थिबन्धाभिरामा ।
रघुपतिपदरक्षे ! राजवाह्यस्य कुम्भे
कलितरुचिरभूस्त्वं कापि नक्षत्रमाला ॥ ५८

889 चरितनिखिलवृत्तिश्चारुपद्मासनस्था
गुणनिबिडितमुक्तापङ्क्तिबद्धाक्षमाला ।
सविधमधिवसन्ती पादुके ! रङ्गभर्तुः
चरणकमलमन्तर्बिम्बितं ध्यायसीव ॥ ५९

890 अनुपधि परिरक्षन्नेकपुत्राभिमानात्
भुवनमिदमशेषं पादुके ! रङ्गनाथः ।
निजपदनिहितायां देवि तिष्ठन् व्रजन् वा
त्वयि निहितभरोऽभूत् किं पुनः स्वापमृच्छन् ॥ ९०

891 त्वरितमुपगतानां श्रीमतो रङ्गभर्तुः
त्वदुपहितपदस्य स्वैरयात्रोत्सवेषु ।
मुखरयति दिगन्तान् मुह्यतां त्वत्प्रशस्तौ
विहितकुसुमवृष्टिर्व्योमघोषी सुराणाम् ॥ ९१

892 मनसि नियमयुक्ते वर्तमाना मुनीनां
प्रतिपदमुपयान्ती भावनीयक्रमत्वम् ।
श्रुतिरिव निजशब्दैः पादुके ! रङ्गभर्तुः
पदमनितरगम्यं व्यङ्क्तुमर्हा त्वमेव ॥ ९२

893 अविकलनिजचन्द्रालोकसन्दर्शनीया
प्रतिकलमुपभोग्या पादुके ! रङ्गभर्तुः ।
मुकुलयितुमशेषं मौक्तिकज्योत्स्नया नः
प्रभवसि तिमिरौघं पौर्णमासी निशेव ॥ ९३

894 हंसश्रेणीपरिचितगतिर्हारिणी कल्मषाणां
मौलौ शंभोस्स्थितिमधिगता मुग्धचन्द्रानुबद्धा ।
राज्ञामेका रघुकुलभुवां सम्यगुत्तारिका त्वं
काले तस्मिन् क्षितिमधिगता पादुके ! जाह्नवीव ॥ ९४

895 स्वच्छाकारां श्रुतिसुरभितां स्वादुभावोपपन्नां
मार्गे मार्गे महितविभवां पादुके ! तीर्थभेदैः ।
शीतस्पर्शां श्रमविनयिनीं गाहते मन्दमन्दं
क्रीडालोलः कमलनिलयादत्तहस्तो युवा त्वाम् ॥ ९५

896 अभ्यस्यन्त्योः क्रममनुपमं रङ्गभर्तुर्विहारे
स्थाने स्थाने स्वरपरिणतिं लम्भितस्तत्तदर्हाम् ।
पर्यायेण प्रहितपदयोः पादुके ! श्रुत्युदारः
शिञ्जानादः स्फुरति युवयोः शृङ्खलाबन्धरम्यः ॥ ९६

897 आसन्नानां दिवसमपुनर्नक्तमापादयन्ती
स्फीतालोका मणिभिरभितः प्राणिनामस्तदोषा ।
प्रह्वैर्जुष्टा विबुधनिवहैः पादुके ! रङ्गभर्तुः
पादाम्भोजे दिशति भवती पूर्वसन्ध्येव कान्तिम् ॥ ९७

898 रम्यालोका ललितगमना पद्मरागाधरोष्ठी
मध्ये क्षामा मणिवलयिनी मौक्तिकव्यक्तहासा ।
श्यामा नित्यं हरितमणिभिश्शार्ङ्गिणः पादरक्षे !
मन्ये धातुर्भवसि महिलानिर्मितौ मातृका त्वम् ॥ ९८

899 स्थित्वा पूर्वं क्वचन भवती भद्रपीठस्य मध्ये
रत्नोदञ्चत्किरणनिकरा रङ्गिणः पादरक्षे ! ।
व्याकीर्णानां नृपतिविरहाद्देवि वर्णाश्रमाणां
नूनं सीमाविभजनसहं निर्ममे सूत्रपातम् ॥ ९९

900 मातर्मञ्जुस्वनपरिणतप्रार्थनावाक्यपूर्वं
निक्षिप्तायां त्वयि चरणयोः पादुके! रङ्गभर्तुः ।
त्वय्यायत्तं किमपि कुशलं जानतीनां प्रजानां
पर्याप्तं तन्न खलु न भवत्यात्मनिक्षेपकृत्यम् ॥ ७०

901 नित्यं रङ्गक्षितिपतिपदन्यासधन्यात्मनस्ते
शिञ्जानादं श्रवणमधुरं पादुके! दीर्घयन्तः ।
काले तस्मिन् करणविगमक्लेशजातं विहन्युः
संतापं नस्तरुणतुलसीगन्धिनो गन्धवाहाः ॥ ७१

902 संसाराध्वश्रमपरिणतं संश्रितानां जनानां
तापं सद्यश्शमयितुमलं शार्ङ्गिणः पादुके! त्वम् ।
चन्द्रापीडे प्रणमति नवां चन्द्रिकामापिबद्भि-
र्धारानिर्यत्सलिलकणिकाशीकरैश्चन्द्रकान्तैः ॥ ७२

903 वज्रोपेतां वलभिदुपलश्यामलां मञ्जुघोषां
मुक्तासारां मधुरचपलां वीक्ष्य विष्णोः पदे त्वाम् ।
हर्षोत्कर्षादुपरि चलयन् पादुके! चन्द्रकान्तं
धत्ते नित्यं धृतघनरुचिस्ताण्डवं नीलकण्ठः ॥ ७३

904 श्रीरङ्गेन्दोश्चरणकमलं तादृशं धारयन्ती
काले काले सह कमलया क्लृप्तयात्रोत्सवश्रीः ।
गत्वा गत्वा स्वयमनुगृहद्वारमुन्निद्रनादा
पौरान्नित्यं किमपि कुशलं पादुके! पृच्छसीव ॥ ७४

905 चतुरनिहारिणीं रुचिरपक्षरुचिं नवतीं
मनसिजसायकासनगुणोचितमङ्गरवाम् ।
अनुपदमाद्रियेमहि महेन्द्रशिलामहितां
हरिचरणारविन्दमकरन्दमधुव्रतिकाम् ॥ ७५

906 कनकरुचा जटामुरगमौलिमणीन् मणिभि-
स्त्रिदिवतरङ्गिणीं तरलमौक्तिकदीधितिभिः ।
कुटिलतया क्वचिच्छशिकलामधरीकुरुषे
मुररिपुपादुके! पुरभिदश्शिरसा विधृता ॥ ७६

907 काले तल्पभुजङ्गमस्य भजतः काष्ठां गतां शेषतां
मूर्तिं कामपि वेद्मि रङ्गनृपतेश्चित्रां पदत्रद्वयीम् ।
सेवानम्रसुरासुरेन्द्रमकुटीशेपापटीसङ्गमे
मुक्ताचन्द्रिकयेव या प्रथयते निर्मोकयोगं पुनः ॥ ७७

908 चन्द्रापीडशिखण्डचन्द्रशिखरच्योतत्सुधानिर्झर-
स्तोकाश्लिष्टसुरेन्द्रशेखररजस्स्त्यानां स्तुमः पादुकाम् ।
ब्रह्मस्तम्बविभक्तसीमविविधक्षेत्रज्ञसर्गस्थिति-
ध्वंसानुग्रहनिग्रहप्रणयिनी या सा क्रिया रङ्गिणः ॥ ७८

909 लक्ष्मीनूपुरशिञ्जितेन गुणितं नादं तवाकर्णयन्
आजिघ्रन्निगमान्तगन्धतुलसीदामोत्थितं सौरभम् ।
काले कुत्रचिदागतं करुणया सार्धं त्वया चाग्रतः
पश्येयं मणिपादुके! परतरं पद्मेक्षणं दैवतम् ॥ ७९

९१० वहति क्षितिमुद्वहितां
  सोऽपि त्वां गतिषु पादुके रङ्गी ।
कमठपतिभुजगपरिवृढ-
  करिवरकुलशिखरिभूमिकाभेदैः ॥ ८०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

प्रकीर्णपद्धतिः एकोनत्रिंशी ।

श्रीः ॥

# त्रिंशी चित्रपद्धतिः ।

---

911 अनुप्रासः ॥

प्रतिष्ठां सर्वचित्राणां प्रपद्ये मणिपादुकाम् ।
विचित्रजगदाधारो विष्णुर्यत्र प्रतिष्ठितः ॥ १

912 अपशब्दाभासः ॥

शृणुते पादुके ! चित्रं चित्राभिर्मणिभिर्विभोः ।
युगक्रमभुवो वर्णान् युगपद्वहसे स्वयम् ॥ २

913 गोमूत्रिकाबन्धः ॥

सुरासुरार्चिता धन्या तुङ्गमङ्गलपालिका ।
चराचराश्रिता मान्या रङ्गपुङ्गवपादुका ॥ ३

914 गूढचतुर्थम् ॥

पद्येव मङ्गलसरित्पारं संसारसन्ततेः ।
दुरितक्षेपिका भूयात् पादुका रङ्गभूपतेः ॥ ४

915 नैरोग्यम् ॥

अनन्यशरणस्सीदन्ननन्तक्लेशसागरे ।
शरणं चरणत्राणं रङ्गनाथस्य संश्रये ॥ ५

916 क्रियावञ्चनम् (प्रहेलिका) ॥

प्रतिभायाः परं तत्त्वं बिभ्रती पद्मलोचनम् ।
पश्चिमायामवस्थायां पादुके! मुह्यतो मम ॥ ६

917 विभक्तिवञ्चनम् (प्रहेलिका) ॥

यामश्श्रयति यां धत्ते येन यात्याय याच्च या ।
यास्यमानाय यैवान्या सा मामवतु पादुका ॥ ७

918 पादावृत्तियमकम् ॥

चर्या नश्शौरिपादु! त्वं प्रायश्चित्तेष्वनुत्तमा ।
निवेश्यसे ततस्सद्भिः प्रायश्चित्तेष्वनुत्तमा ॥ ८

919 पादानुलोमप्रतिलोमयमकम् ॥

रामपादगता भासा सा भातागदपामरा ।
कादुपानञ्च का सह्या ह्यासकाञ्चनपादुका ॥ ९

920 अपुनरुक्तव्यञ्जनम् ॥

बाढाघाळीझाटतुच्छे गाथाभानाय फुल्लखे ।
समाधौ शठजिच्चूडां वृणोषि हरिपादुके! ॥ १०

921 मुरजबन्धः ॥

सा भूपा रामपारस्था विभूपास्तिसपारता ।
तारपा सकृपा दुष्टिदूरपा रामपादुका ॥ ११

922 अनतिरिक्तपदपदार्थानुलोमप्रतिलोमयमकम् ॥

कारिका न न यात्राया या गेयास्यस्य भानुभा ।
पादपा ह ह सिद्धासि यज्ञाय मम साञ्जसा ॥ १२

923 शरबन्धः ॥

सराघवा श्रुतौ दृष्टा पादुका सनृपासना ।
सराघवा गतौ श्लिष्टा स्वादुर्मे सदुपासना ॥ १३

924 गरुडगतिचक्रबन्धः ॥

काम्यायास्थितमावगेऽव्याजयातगमार्गका ।
कामदा जगतस्थित्यै रङ्गपुङ्गवपादुका ॥ १४

925 द्विशृङ्गाटकचक्रबन्धः ॥

सुरकार्यकरी देवी रङ्गधुर्यसुपादुका ।
कामदा कलितादेशा चरन्ती साधुवर्त्मसु ॥ १५

926 द्विचतुष्कचक्रबन्धः ॥

भरताराधितां तारां वन्दे राघवपादुकाम् ।
भवतापाधितांतानां वन्द्यां राजीवमेदुराम् ॥ १६

927 चतुररचक्रबन्धः अष्टदलपद्मबन्धश्च ॥

कादुपास्वनदालोका कालोदाहृतदामका ।
कामादाध्वरिरंसाकाकासा रङ्गेशपादुका ॥ १७

928 सकर्णिकषोडशदलपद्मबन्धः ॥

पापाकूपारपालीपा त्रिपादीपादपादपा ।
कृपारूपा जपालापा स्वापा मा पान्नृपाधिपा ॥ १८

929 चतुरङ्गतुरङ्गपदबन्धः ॥

स्थिरागसां सदाराध्या विहताकततामता ।
सत्पादुके सरासा मा रङ्गराजपदं नय ॥ १९

930 पूर्वस्मिन्तुरङ्गपदक्रमेण उद्धार्यश्लोकः ॥

स्थिता समयराजत्पागतरा मोदके गवि ।
दुरंहसां सन्नताद्या साध्यातापकरासरा ॥ २०

(अनयोः श्लोकयोरेकवाक्यतया अन्वय इत्याचार्यैरुक्त इति संप्रदायः)

931 अर्धभ्रमकम् ॥

लोकतारकामचारा कविराजदुरावचा ।
तारा गते पादराम राजते रामपादुका ॥ २१

932 सर्वतोभद्रम् ॥

जयामपापामयाजयामहे दुदुहे मया ।
महेदाकाशशाहेमपादुका मम कादुपा ॥ २२

933 द्व्यज्झल्विपर्यययमकसर्वतोभद्रम् ॥

पापादपापादपापापादपाददपादपा ।
दपादपापादपादपादपाददपादपा ॥ २३

934 त्र्यक्षरः ॥

कोपोद्दीपकपापेऽपि कृपापाकोपपादिका ।
पूदपादोदकापादोद्दीपिका कापि पादुका ॥ २४

935 एकाक्षरः ॥

ततातत्तातितत्तेता नातनीतेतितातितुत् ।
तत्तत्तत्तानतितता तत्तेतातेततातुना ॥ २५

936 सर्वविषयसमुच्चयमहायमकम् ॥

यायायायायायायायायायायायायायाया ।
यायायायायायायायायायायायायायाया ॥ २६

937 पादचतुष्टयभागावृत्तियमकम् ॥

रघुपतिचरणावनी तदा
विरचितसञ्चरणा वनीपथे ।
कृतपरिचरणा वनीपकै-
र्निगममुखैश्चरणावनी गता ॥ २७

938 द्वितीयतुरीयपादयोः पादभागचतुरावृत्तियमकसंसृष्टिः ॥

दत्तकेलिं जगत्कल्पनानाटिका-
रङ्गिणारङ्गिणा रङ्गिणा रङ्गिणा ।
तादृशे गाधिपुत्राध्वरे त्वां विना
पादुका पातु का पातु कापादुका ॥ २८

939 षोडशावृत्तियमक अष्टदलपद्मादिसंसृष्टिः ॥

पादपापादपापादपापादपा
पादपापादपापादपापादपा ।
पादपापादपापादपापादपा
पादपापादपापादपापादपा ॥ २९

940 कविनामाङ्कितमष्टदलपद्मम् ॥

साकेतत्राणवेलाजनिततनिजप्राङ्गणश्रीप्रभासा
साभा प्रश्रीरटव्यामियममयमिव्यापदुच्छेदिलासा ।
सालादिच्छेदतिग्माहवरुरुरुवहहीकरस्यामरासा
सा रामस्याङ्घ्रिमभ्याज.तिनननतिजस्थूलमुत्खातके सा ॥

941 कविकाव्यनामाङ्कितं षडरमहाचक्रम् ॥

रम्ये वेश्मनि पापराक्षसभिदास्वासक्तधीनायिका
नन्तुङ्कर्मजदुर्मदालसधियां सा हन्त नाथीकृता ।
सद्वाटभ्रमिकासु तापसतपोविस्रम्भभूयत्रिका
काचित् स्वैरगभेन केलिसमये कामव्रता पादुका ॥ ३१

942 चतुरङ्कमष्टारं चक्रम् ॥

श्रीसंवेदनकर्मकृद्वसु तव स्यामृद्धधैर्यस्फुटः
श्रीपादावनि! विस्तृतासि सुखिनी त्वं गेययातायना ।
वेदान्तानुभवातिपातिसुतनुस्सान्द्रेड्यभावप्रथे-
ऽङ्कस्था चाच्युतदिव्यदास्यसुमतिः प्राणस्थसीताघन ॥

943 भिन्नवृत्तश्लोकानुलोमगोमूत्रिकायां प्रथमः श्लोकः ॥

कनकपीठनिविष्टतनुस्तदा
सुमतिदायिनिजानुभवस्मृता ।
विधिशिवप्रमुखैरभिवन्दिता
विजयते रघुपुङ्गवपादुका ॥ ३३

944 द्वितीयः श्लोकः ॥

दीनगोपीजनिक्लिष्टभीनुत्सदा
रामपादावनि! स्वानुभावस्थिता ।
एधि मेऽवश्यमुत्तारभावश्रिता
तेजसा तेन घुष्टिङ्गता पालिका ॥ ३४

945 भिन्नवृत्तश्लोकप्रतिलोमगोमूत्रिकायां प्रथमः श्लोकः ॥

धामनिराकृततामसलोका
धातृमुखैर्विनतानिजदासैः ।
पापमशेषमपाकुरुषे मे
पादु! विभूषितराघवपादा ॥ ३५

946 द्वितीयःश्लोकः ॥

कृपानघत्रातसुभूरदुष्टा
मेध्या रुचा पारिषदाम भूपा ।
पदावनि ! स्त्यानसुखैर्न तृप्ता
कान्त्या सभेताधिकृतानिरोधा ॥ ३६

947 भिन्नवृत्तश्लोकानुलोमप्रतिलोमचित्रे प्रथमः श्लोकः ॥

सारससौख्यसमेता
ख्याता पदपा भुवि स्वाज्ञा ।
साहसकार्यवनाशा
धीरा वसुदा नवन्यासा ॥ ३७

948 द्वितीयः श्लोकः ॥

सान्यावनदा सुवराधीशाना वर्यका सहसा ।
ज्ञा स्वा विभुपादपताख्याता मे सख्यसौ सरसा ॥ ३८

949 पादुकायुगलगर्भकर्णिकमष्टदलपद्मम् ॥

तारस्फारतरस्वर-
रसभरता सा पदावनी सारा ।
धीरस्वैरचरस्थिर-
रघुपुरवासरतिरामसवा ॥ ३९

950 पादद्वयभागद्व्यावृत्तियमकम् यमकानुप्रासयोस्संकरः ॥

चरमचरं च नियन्तु-
श्चरणावनिदंपरेतरा शौरेः ।
चरमपुरुषार्थचित्रौ
चरणावनि दिशसि चत्वरेषु सताम् ॥ ४०

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीपादुकासहस्रे

चित्रपद्धतिः त्रिंशी ।

श्री. ॥

# एकत्रिंशी निर्वेदपद्धतिः ।

प्रपद्ये पादुकां देवीं परविद्यामिव स्वयम् ।
यामर्पयति दीनानां दयमानो जगद्गुरुः ॥ १

अपि जन्मनि पादुके ! परस्मि-
न्ननघैः कर्मभिरीदृशो भवेयम् ।
य इमे विनयेन रङ्गभर्तु-
स्समये त्वां पदयोस्समर्पयन्ति ॥ २

परिवर्तयिता पितामहादीन्
त्वमिवानन्तमसौ वहत्यनेहा ।
अधुनापि न शौरिपादुके ! त्वा-
मनघालम्बनमभ्युपैति चित्तम् । ३

कमलाध्युषिते निधौ निरीहे
सुलभे तिष्ठति रङ्गकोशमध्ये ।
त्वयि तत्प्रतिलम्भने स्थितायां
परमन्विच्छति पादुके ! मनो मे ॥ ४

955 यद्यप्यहं तरलधीस्तव न स्मरेयं
न स्मर्तुमर्हति कथं भवती स्वयं मे ।
वत्से विहारकुतुकं कलयत्यवस्था
का नाम केशवपदावनि! वत्सलायाः ॥ ५

956 मातर्मुकुन्दकरुणामपि निह्नुवानात्
किं वा परं किमपि किल्बिषतो मदीयात् ।
गाढं गृहीतचरणागमनापदेशात्
तत्प्रेरणप्रणयिनी तव चेन्न लीला ॥ ६

957 क्षीबासि काञ्चनपदावनि! कैटभारेः
पादारविन्दमकरन्दनिषेवणेन ।
देवि त्वदन्तिकजुषः कथमन्यथा मे
दीनाक्षराणि न शृणोषि दयाधिका त्वम् ॥ ७

958 मातस्त्वदर्पितभरस्य मुकुन्दपादे
भद्रेतराणि यदि नाम भवन्ति भूयः ।
कीर्तिः प्रपन्नपरिरक्षणदीक्षितायाः
किं न त्रपेत तव काञ्चनपादरक्षे! ८

959 दौवारिकद्विरसनप्रबलान्तरायैः
दूये पदावनि! दुराढ्यबिलप्रवेशैः ।
तद्रङ्गधामनिरपायघनोत्तरायां
त्वय्येव विश्रमय मङ्क्षु मनोरथं मे ॥ ९

960 व्यामुह्यतां त्रिविधतापमये निदाघे
मायाविशेषजनितासु मरीचिकासु ।
संस्पृष्टशौरिचरणा चरणावनि! त्वं
स्थेया स्वयं भवसि नश्वरमे पुमर्थे ॥ १०

961 अच्छेद्यया विषयवागुरया निबद्धान्
दीनान् जनार्दनपदावनि! सत्पथस्था ।
प्रायः क्रमेण भवती परिगृह्य मौलौ
कालेन मोचयति नः कृपया सनाथा ॥ ११

962 संवाहिका चरणयोर्मणिपादरक्षे!
देवस्य रङ्गवसतेर्दयिता ननु त्वम् ।
कस्त्वां निवारयितुमर्हति योजयन्तीं
मातस्तुतद्गुणगणेषु ममापराधान् ॥ १२

963 किं वा भविष्यति परं कलुषैकवृत्ते-
रेतावताप्यनुपजातमनेहसा मे ।
एकं तदस्ति यदि पश्यसि पादुके! ते
पद्मासहायपदपङ्कजभोगसाम्यम् ॥ १३

964 विविधविषयचिन्तासन्तताभिश्चिरं मां
जनितकलुषमित्थं देवि दुर्वासनाभिः ।
पदसरसिजयोस्त्वं पादुके! रङ्गभर्तुः
परिमलपरिवाहैः पावनैर्वासयेथाः ॥ १४

965 शरणमधिगतस्त्वां शार्ङ्गिणः पादरक्षे!
सकृदपि विनियुक्तं त्वत्सपर्याधिकारे ।
पुनरपि कथमेनं हस्तमुत्तानयेय
धनमदमुदितानां मानवानां समाजे ॥ १५

966 यदि किमपि समीहे कर्म कर्तुं यथावत्
प्रतिपदमुपजातैः प्रत्यवैयां निमित्तैः ।
अवधिरसि यदि त्वं तत्र नैमित्तिकानां
शरणमिह न किं मे शौरिपादावनि! स्याः ॥ १६

967 अन्तर्लीनैरघपरिकरैराविला चित्तवृत्तिः
शब्दादीनां परवशतया दुर्जयानीन्द्रियाणि ।
विष्णोः पादप्रणयिनि! चिरादस्य मे दुःखसिन्धोः
पारं प्राप्यं भवति परया विद्यया वा त्वया वा ॥ १७

968 गोमायूनां मलयपवने तस्कराणां हिमांशौ
दुर्वृत्तानां सुचरितमये सत्पथे त्वत्सनाथे ।
तत्त्वज्ञाने तरलमनसां शार्ङ्गिणः पादरक्षे!
नित्योद्वेगो भवति नियतेरीदृशी दुर्विनीतिः ॥ १८

969 काले जन्तून् कलुषकरणे क्षिप्रमाकारयन्त्याः
घोरं नाहं यमपरिषदो घोषमाकर्णयेयम् ।
श्रीमद्रङ्गेश्वरचरणयोरन्तरङ्गैः प्रयुक्तं
सेवाह्वानं सपदि शृणुयां पादुकासेवकेति ॥ १९

970 पाषाणकल्पमन्ते
परिचितगौतमपरिग्रहन्यायात् ।
पतिपदपरिचरणार्हं
परिणमय मुकुन्दपादरक्षिणि ! माम् ॥ २८

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

**श्रीपादुकासहस्रे**

**निर्वेदपद्धतिः एकत्रिंशी ।**

श्री ॥

# द्वात्रिंशी फलपद्धतिः ।

971 उपाख्यातां तथात्वेन वसिष्ठाद्यैर्महर्षिभिः ।
उपायफलयोः काष्ठामुपासे रामपादुकाम् ॥ १

972 निर्विशेय निरन्तरं प्रतीत-
त्रिदशानां विभवं तृणाय मत्वा ।
सविधे तव देवि ! रङ्गभर्तुः
पदलीलाकमलं समुद्वहन्त्याः ॥ २

973 किमहं मणिपादुके ! त्वया मे
सुलभे रङ्गनिधौ श्रिया सनाथे ।
करणानि पुनः कदर्थयेयं
कृपणद्वारदुरासिकादिदुःखैः ॥ ३

974 सकृदप्यनुभूय रङ्गभर्तुः
त्वदुपश्लेषमनोहरं पदाब्जम् ।
अपुनर्भवकौतुकं तदैव
प्रशमं गच्छति पादुके ! मुनीनाम् ॥ ४

975 अपरस्परपातिनाममीषा-
मनिदंपूर्वनिरूढसन्ततीनाम् ।
भरतव्यसनादनूनसीम्नां
दुरितानां मम निष्कृतिस्त्वमासीः ॥ ५

976 त्वदुपासनसंप्रदायविद्भि-
स्समये सात्त्वतसेविते नियुक्ताः ।
भग्नव्रतिनो भवाम्बुराशिं
कतिचित् काञ्चनपादुके! तरन्ति ॥ ६

977 अलमच्युतपादुके! यथाव-
द्भवती यत्र पदं त्वदेकधार्यम् ।
इतरेतरभूषिते तदेत-
द्द्वितयं संवननाय चेतसो नः ॥ ७

978 अनन्यसामान्यतया मुरारेः
अङ्गेष्ववाप्तेषु किरीटमुख्यैः ।
पादावनि! त्वं निजमेव भागं
सर्वात्मसाधारणतामनैषीः ॥ ८

979 समाश्रितानां मणिपादुके! त्वां
विपश्चितां विष्णुपदेऽप्यनास्था ।
कथं पुनस्ते कृतिनो भजेरन्
वासादरं वासवराजधान्याम् ॥ ९

980 विमृश्य रङ्गेश्वरपादरक्षे!
वारक्रमं नूनमवारणीयम् ।
पद्माग्रहेऽपि स्पृशती प्रतीता
स्थूलेन रूपेण वसुन्धरा त्वाम् ॥ १०

981 अभिरक्षसि त्वामनपायनिधिं
मणिपादुके ! मधुभिदश्चरणम् ।
अत एव देवि तदनन्यधना-
श्शिरसा वहन्ति भवतीं कृतिनः ॥ ११

982 पदयुगमिव पादुके ! मुरारे-
र्भवति विभूतिरकण्टका त्वयैव ।
कथमिव हृदयानि भावुकानां
त्वदनुभवादुपजातकण्टकानि ॥ १२

983 ज्ञानक्रियाभजनसीमविदूरवृत्ते-
र्वैदेशिकस्य तदवाप्तिकृतां गुणानाम् ।
मौलौ ममासि मधुसूदनपादुके ! त्वं
गङ्गेव हन्त पतिता विधिनैव पङ्गोः ॥ १३

984 रङ्गेश्वरस्य यदिदं मणिपादरक्षे !
पादारविन्दयुगलं भवतीसमेतम् ।
पुंसामुपोषितविलोचनपारणार्हं
क्षीरं तदेतदिह शर्करया समेतम् ॥ १४

985 कामादिदोषरहितं त्वदनन्यकामाः
कर्म त्रयोदशविधं परिशीलयन्तः ।
पादावनि ! त्वदनुषङ्गविशेषदृश्य-
मेकान्तिनः परिचरन्ति पदं मुरारेः ॥ १५

986 मौलौ स्थिता मखभुजामथवा श्रुतीनां
तद्रङ्गराजचरणावनि ! वैभवं ते ।
अस्मादृशामपि यदि प्रथितं ततस्स्या-
त्सौलभ्यमम्ब तदिदं तव सार्वभौमम् ॥ १६

987 स्वप्नेऽपि चे (य) त्वमसि मूर्धनि सन्निविष्टा
नम्रस्य मे नरकमर्दनपादरक्षे ! ।
स्थाने तदै (दे) तदिह देवि यतस्समाधौ
सन्तो विदुस्तमपि नादृशबुद्धिगम्यम् ॥ १७

988 वद्धाञ्जलिः परिचरन्नियमेन रङ्गे
विश्राणिताच्युतनिधिं मणिपादुके ! त्वाम् ।
कस्यापि कृणितदृशो धनिनः पुरस्ता-
दुत्तानयेय न कदापि करं विकोशम् ॥ १८

989 त्वय्यर्पितेन चरणेन सदध्वभाजः
पादावनि ! प्रथितसात्त्विकभावदृश्याः ।
रङ्गेशवद्विदधते मुहुरङ्गहारान्
रङ्गे महीयसि नटा इव भावुकास्ते ॥ १९

990 येन स्थिता शिरसि मे विधिनाधुना त्वं
तेनैव देवि नियतं मम सांपराये ।
लक्षीकरिष्यसि पदावनि ! रङ्गनाथं
लक्ष्मीपदाम्बुरुहयावकपङ्कलक्ष्यम् ॥ २०

991 हरिचरणसरोजे भक्तिभाजां जनाना-
मनुकरणविशेषैरात्मनैवोपहास्यम् ।
परिणमय दयार्द्रा पादुके ! तादृशं मां
भरतपरिषदन्तर्वर्तिभिः प्रेक्षणीयम् ॥ २१

992 दुरितमपनयन्ती दूरतः पादुके ! त्वं
दनुजमथनलीलां देवतामानयन्ती ।
अनितरशरणानामग्रिमस्यास्य जन्तो-
रवशकरणवृत्तेरग्रतस्सन्निवेयाः ॥ २२

993 चरमनिगमगीते सप्ततन्तौ समाप्ते
निजसदनसमीपे प्रापयिष्यन्विहारम् ।
ज्वलनमिव भवत्योस्सम्यगारोपयेन्मां
प्रथमवरणवश्यः पादुके ! रङ्गनाथः ॥ २३

994 पुनरुदरनिवासच्छेदनं सह्यसिन्धोः
पुलिनमधिवसेयं पुण्यमाब्रह्मलाभात् ।
परिणमति शरीरे पादुके ! यत्र पुंसां
त्वमसि निगमगीता शाश्वतं मौलिरत्नम् ॥ २४

995 बहुविधपुरुषार्थग्रामसीमन्तरेखां
हरिचरणसरोजन्यासधन्यामनन्यः ।
भरतसमयसिद्धां पादुके ! भावयंस्त्वां
शतमिह शरदस्ते श्रावयेयं समृद्धिम् ॥ २५

996 तिलकयसि शिरो मे शौरिपादावनि ! त्वं
भजसि मनसि नित्यं भूमिकां भावनाख्याम् ।
वचसि च विभवैः स्वैर्व्यक्तिमित्थं प्रयाता
तदिह परिणतं मे तादृशं भागधेयम् ॥ २६

997 अजनिषि चिरमादौ हन्त देहेन्द्रियादि-
स्तदनु तदधिकस्सन्नीश्वरोऽहं बभूव ।
अथ भगवत एवाभूवमर्थादिदानीं
तव पुनरहमासं पादुके ! धन्यजन्मा ॥ २७

998 त्वय्यायत्तौ भगवति शिलाभस्मनोः प्राणदाना-
दास्त्रीबालं प्रथितविभवौ पादपद्मौ मुरारेः ।
तामेवाहं शिरसि निहितामद्य पश्यामि दैवा-
दात्माधारां जननि ! भवतीमात्मलाभप्रसूतिम् ॥ २८

999 कथङ्कारं लक्ष्मीकरकमलयोग्यं निजपदं
निदध्याद्रङ्गेशः कुलिशकठिनेऽस्मिन्मनसि नः ।
न चेदेवं मध्ये विशति दयया देवि ! भवती
निजाक्रान्तिक्षुण्णस्मरशरशिखाकण्टकततिः ॥ २९

1000 क्रीडालौल्यं किमपि समये पादुके ! वर्जयन्ती
निर्वेशं स्वं दिशसि भवतीनाथयोः श्रीधरण्योः ।
मामप्येवं जनय मधुजित्पादयोरन्तरङ्गं
रङ्गं यासौ जनयसि गुणैर्भारतीनृत्तरङ्गम् ॥ ३०

1001 इति रङ्गधुरीणपादुके! त्वं
स्तुतिलक्ष्येण सहस्रशो विमृश्य ।
सफलं मम जन्म तावदेत-
द्यदिहाशास्यमतः परं किमेतत् ॥ ३१

1002 मातः स्वरूपमिव रङ्गपतेर्निविष्टं
वाचामसीमनि पदावनि! वैभवं ते ।
मोहादभिष्टुतवतो मम मन्दबुद्धेः
बालस्य साहसमिदं दयया सहेथाः ३२

1003 ये नाम भक्तिनियताः कवयो मदन्ये
मातः स्तुवन्ति मधुसूदनपादुके! त्वाम् ।
लभ्ये गुणांशविनिवेशितमानसानां
तेषामहं सबहुमानविलोकितानि ॥ ३३

1004 सङ्कर्ष(व)यन्ति हृदयान्यसतां गुणांशे
सन्तस्तु सन्तमपि न प्रथयन्ति दोषम् ।
तद्रङ्गनाथचरणावनि! ते स्तुतीनां
एका परं सदसतोरिह साक्षिणी त्वम् ॥ ३४

1005 इत्थं त्वमेव निजकेलिवशादकार्षी-
रिक्ष्वाकुनाथपदपङ्कजयोरनन्या ।
स्वीयं पदावनि! मया सुमहच्चरित्रं
सीतेव देवि सहजेन कवीश्वरेण ॥ ३५

१२१. मुरज बन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सो | भू | पा | रा | म | पा | र | स्था |
| त्रि | भू | पा | स्ति | स | पा | र | ता |
| तेः | र | पा | स | कृ | पा | द्रु | हि |
| पू | रू | पा | रा | म | पा | द्रु | का |

१२३. शरबन्धः



924. (1) गरुडगति चक्रबन्धः



९२४. (२) गरुडगति चक्रबन्धः



25. द्विश्रृङ्गाटक चक्रबन्धः



926. द्विचतुष्क चक्रबन्धः



१२७. (२) अष्टदल पद्मबन्धः



१२३. सकर्णिकषोडशदलपद्मबन्धः



929. (1) चतुरङ्गतुरङ्ग पद्बन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स्थि | रा [illegible] | ग 1 | सां [illegible] | स 3 | दा 24 | रा 11 | द्या 26 |
| वि [illegible] | ड [illegible] | ता [illegible] | क [illegible] | त 10 | ता 27 | म [illegible] | ना 23 |
| स [illegible] | त्पा [illegible] | ड्ड 7 | कै [illegible] | स [illegible] | रा [illegible] | सा 25 | मा 12 |
| रं [illegible] | गा [illegible] | दा [illegible] | ज 7 | प [illegible] | द 13 | ब्रे 22 | य 6 |

930. (2) चतुरङ्गतुरङ्ग पद्बन्धः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स्थि | ता | स | म | य | रा | ज | त्पा |
| ग | त | रा | मा | द | कै | ग | वि |
| ड्ड | रं | ह | सां | स | ब्र | ता | दा |
| सा | द्या | ना | प | क | रा | स | रा |

931. अर्धभ्रमकम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| लो | क | ता | रा | का | म | चा | रा |
| क | बि | रा | ज | ढु | रा | व | चा |
| ता | रा | ग | ते | पा | द | रा | म |
| रा | ज | ते | रा | म | पा | दु | का |
| का | दु | पा | म | रा | ते | ज | रा |
| म | रा | द | पा | ते | ग | रा | ता |
| चा | व | रा | ढु | ज | रा | बि | क |
| रा | चा | म | का | रा | ता | क | लो |

932. (1) सर्वतोभद्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ज | या | म | पा | पा | म | या | ज |
| या | म | हे | दु | दु | हे | म | या |
| म | हे | श | का | का | श | हे | म |
| पा | दु | का | म | म | का | दु | पा |
| पा | दु | का | म | म | का | दु | पा |
| म | हे | श | का | का | श | हे | म |
| या | म | हे | दु | दु | हे | म | या |
| ज | या | म | पा | पा | म | या | ज |

933. (2) द्व्यक्षरविषय यमक सर्वतोभद्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पा | पा | द | पा | पा | द | पा | पा |
| पा | द | पा | द | द | पा | द | पा |
| द | पा | द | पा | पा | द | पा | द |
| पा | द | पा | द | द | पा | द | पा |
| पा | द | पा | द | द | पा | द | पा |
| द | पा | द | पा | पा | द | पा | द |
| पा | द | पा | द | द | पा | द | पा |
| पा | पा | द | पा | पा | द | पा | पा |

१३०. चतुर्दलपद्मबन्धः



939. अष्टदलपद्मबन्धः



939. **षोडशदलपद्मबन्धः**



940. वेङ्कटपतिकमलम् इति कविनामाङ्किताष्टदलपद्मबन्धः



941. वेङ्कटनाथीयं पादुकासहस्रमिति कविकाव्यनामाङ्कितषडरमहाचक्रम्



1042. श्रीश्रीवेङ्कटनाथेन वेदान्ताचार्यनाम्ना ।
कविवादिमृगेन्द्रेण कृता पादावनी नुतिः ॥
इति कविनामस्वरूपगुणक्रियाबोधकं चतुरङ्कमष्टारं चक्रम्



॥ श्री. ॥

## ॥ पादुकासहस्रश्लोकानुक्रमणिका ॥

*

॥ श्रीः ॥

## ॥ पाठभेदाः ॥

"वाचोविधेयं तत्सर्वं कृत्वा काव्यम्" इतिवत् विद्वद्वाचोविधेयतया विद्यमाने काव्येऽस्मिन् नातीव पाठभेदाः । तत्र नादपद्धत्या द्वाचत्वारिंशश्लोके तुरीयपादे "तानप्रदानमिव" इति मूले पाठः, तद्व्याख्याने तु "गानस्य ...प्रदानम्" इति प्रतीकग्रहणं विवरणं च निर्णयसागरयन्त्रालयमुद्रिते पुस्तके दृश्यते । "तानप्रदानम्" इति पाठः चारुतरः । यादवाभ्युदयाष्टमसर्गं परामृशता "तान" पाठसारस्यं प्रत्यक्षम् । महाकविश्रीकालिदासकृतकुमारसंभवश्लोकस्य अत्र सादरमनूद्यमानत्वं स्पष्टम् । स च श्लोकः—

"यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नरगणा तानप्रदायित्वमिवोपगन्तुम् ॥

इति १. ८,

तथापि, सर्वत्र व्याख्याने "गान" पाठोपलब्धेः व्याख्यानमनुसृत्य "तान" पाठः पाठान्तरत्वेन अत्र प्रदर्शितः ।

| श्लोकः | पादः | पाठभेदाः |
|---|---|---|
| २५. | २. | गाथास्सहस्रम् |
| ३९. | २. | परीक्षिन्ति |
| ५८. | ४. | अघटितघटिनी, अघटितघटना. |
| ६३. | ३ | मदञ्जरी |

| | | |
|---|---|---|
| ३६०. | ४ | भवतीचरिता |
| ४२२ | ४. | तानप्रदानमित्र |
| ९५७. | ३. | दैवात्त्वदन्तिकजुष |
| ९६२ | ४ | स्वयं गुणगणेषु |
| १००६ | १ | पृथुकवदनशङ्खस्पर्शरीत्या |



॥ श्रीः ॥

## ॥ शुद्धाशुद्धपत्रिका ॥

| श्लो | पाद | अशुद्ध | शुद्ध. |
|---|---|---|---|
| ४५ | ४ | मृत्यो | भृत्यो |
| १२४ | ४ | पर | पार |
| २०३ | ४ | स्तप | स्नप |
| २१५ | २ | गुङ्ट | गुङ्ढ |
| ३३० | १ | अच | अर्च |
| ३३३ | १ | नायेम | ये नाम |
| ४०२ | १ | चित्रे | चित्रै |
| ४७८ | १ | शक | शर्क |
| ५७२ | ३ | पादे! | पादे |
| ५७९ | ४ | स्वाच्छद्यं | स्वाच्छन्द्यं |

| | | | |
|---|---|---|---|
| ६०७ | ३ | मङ्क्ष | मङ्क्षु |
| ६११ | २ | सिध्द्य | सिध्य |
| ६२९ | १ | यविक्रम्मा | विक्रम्य |
| ६३७ | १ | निस्सो | निस्सी |
| ६४१ | ३ | भाजो- | भाजो |
| ७०४ | १ | नीले | नीलै |
| ७७१ | १ | लङ्क्ि | लङ्क्ि |
| ८५० | २ | कपोल | कोपल |
| ८६६ | १ | पट | टप |
| ९२९ | २ | दंन | दन्न |
| ९३० | १ | मोद | माद |
| ९६२ | ४ | मातसु | मातस्सु |
| ९६७ | ३ | भे | मे |
| १००० | ४ | गुण | गुणै |